॥ श्रीः ॥

शाधमुक्तावळी—




# श्रीरामानुजसिद्धान्तसार

वात्स्य श्री श्रीनिवासाचार्यतनुजैः
श्रीवरदाचार्यैः
विरचितः ।

श्री कांची—प्रतिवादिभयङ्कर—अनन्ताचार्यैः
संशोधितः ।

श्रीसुदर्शनमुद्राक्षरशालायां
मुद्रितः ।




॥ श्रीकाञ्ची ॥
१९३४

श्री ।

# भूमिका ।

अयं श्रीरामानुजसिद्धान्तसारनामा ग्रन्थो नातिसंक्षेपविस्तरं लिखितः प्रायस्सर्वानपि श्रीरामानुजसिद्धान्तानुसारिणः पदार्थान् लक्षणप्रमाणाभ्यां सरळया पद्धत्या निरूपयन् बहूपकरोति सर्वेषामेव तत्त्वजिज्ञासूनामिति मन्यामहे वयम् ।

ग्रन्थकर्तायं श्रीवरदाचार्यस्तत्त्वसारादिग्रन्थनिर्मातुः 'अम्माळ्' इति प्रसिद्धात् श्रीवरदाचार्यादन्य एवेति मन्यन्ते केचित्। अनेन ग्रन्थकर्त्रा निर्मितो नान्य कोपि ग्रन्थोस्माभिरुपलब्धः । महीशूरपुर राजकीय प्राच्य कोशागारे, रामानुजसिद्धान्तसारस्य छायादर्शो (A१७३) (१८८८) संख्योस्ति । अस्माभिस्त्वस्मदीयश्रीहयवदन—लीलासदनपुस्तकालयस्थमेकमेवादर्शमवलम्ब्य यथामति संशोध्य परिष्कृतोयमिति सम्भाव्यते नूनमत्र बहव एव दोषास्स्युरिति । बहोः कालात्पूर्वमेवारब्धस्यास्य मुद्रणं नानाविधविघ्नजातविलम्बितमद्य पूर्णं भवति ।

इति सम्पादकः ।

———




श्री. ।

श्रीमते रामानुजाय नमः ।

# रामानुजसिद्धान्तसारः ।

नीलोत्पलदलश्यामं निर्मलानन्दरूपिणम् ।
निर्हेतुककृपायुक्तं नित्यं सेवे रमापतिम् ॥१॥
श्रीनिवासं परं ब्रह्म जगज्जन्मादिकारणम् ।
निर्मलानन्दकल्याणगुणसन्दोहमाश्रये ॥२॥
वन्दे हस्तगिरीन्द्रेशं वाञ्छितार्थप्रदायिनम् ।
शरण्यं सर्वलोकानां प्रणतार्तिहरं हरिम् ॥३॥
वात्स्येन वरदाचार्यविदुषा विदुषां मुदे ।
श्रीरामानुजसिद्धान्तसारस्सङ्गृह्यतेऽधुना ॥४॥

इह खलु "भोक्ता भोग्यं प्रेरितारं च मत्वा जुष्टस्ततस्तेनामृतत्वमेति" " पृथगात्मानं प्रेरितारं च मत्वा जुष्टस्ततस्तेनामृतत्वमेति " "जुष्टं यदा पश्यत्यन्यमीशमि" त्यादिप्रमाणानुसारेण तत्त्वत्रयज्ञानं मोक्षसाधनमामनन्ति । तच्च प्रमाणाधीनं तत्त्वत्रयविवेकाधीनं चेत्यत्र प्रमाणं तत्त्वत्रयं च निरूप्यते, तत्रापि प्रमाणाधीनं तत्त्वत्रयनिरूपणमित्यादौ प्रमाणं निरूप्यते ।

तत्र प्रमाकरणं प्रमाणम् । प्रमा च अबाध्यव्यवहारमात्रजननस्वरूपयोग्यज्ञानविशेषः । अबाध्यविशेषणाद्विपर्ययतर्कयोर्निरासः, तयोर्बाध्यव्यवहार एव हेतुत्वात् । वस्तुतस्तर्कोऽनुमानविशेष एव, यगुपश्लेष-स्वाच्छन्द्ययोगाभ्यामनुग्राह्यप्रमाणविषयानुमित्यनुकूलव्यतिरेकव्याप्तिसूचनेन यदि विषं भक्षयिष्यसि तदा मरिष्यसीत्यादिवाक्ये मिथ्यावचनत्वनिरासाय आपादकव्यतिरेकपर्यवसानकल्पनासमये सामान्यत एवानिष्टप्रसञ्जनमात्रस्यापादकव्यतिरेकपर्यवसान

कल्पनेन चापाद्याभावेनापादकाभावानुमितिरूपत्वनिश्चयात् । न च यद्युपश्लेपस्याच्छब्दयोगरूपाकारवैलक्षण्यादस्यानुमानाद्भेदः शङ्कनीयः, उक्तरीत्याऽनुमानान्तर्भावसिद्धौ [illegible] ऽनुमान[illegible] स्यैव सिद्धेः ।

न चानुग्राह्यप्रमाणविशेषफलस्य तर्केणैव सिद्धेस्तद्वैयर्थ्यं शङ्कनीयम्, व्यतिरेकमुखेन तत्सिद्धावप्यन्वयमुखेन तदसिद्धेः । भावात् । न च तर्कस्य प्रमाणान्तर्भावे प्रमाणानुग्राहकत्वानुपपत्तिः, प्रमाणत्वेऽप्यनुग्राह्यप्रमाणप्रवृत्तिप्रतिबन्धकविरोधिजिज्ञासानिवृत्त्यनुकूलत्वेनानुग्राहकत्वोपपत्तेः । अन्यथा विरोधिजिज्ञासानिवर्तकत्वाभावे प्रमाणानुग्राहकत्वानुपपत्तेरिति ।

मात्रपदेन संशयव्यवच्छेदः, तस्य सदसद्विरुद्धकोटिद्वयावलम्बिनो बाधिताबाधितव्यवहारहेतुत्वात् । स्वरूपयोग्यविशेषणादजनितव्यवहारप्रमायामव्याप्तिवारणम्, तत्रार्थक्रियाकारिविषयकज्ञानत्वस्वरूपयोग्यतावच्छेदकसत्त्वेन योग्यतमत्वात् । न च तर्हि तदेव लक्षणमस्त्विति वाच्यम्, तस्य लक्ष्यतावच्छेदकतया लक्षणत्वासम्भवात् ।

न चाबाध्यत्वं ज्ञान एव विशेषणमस्तु, किं तस्य व्यवहारविशेषणत्वेनेति वाच्यम्; यथार्थख्यात्यख्यात्यन्यथाख्यात्यभ्युपगन्तृमते तस्य व्यवहारविशेषणत्वमन्तरेण विपर्ययनिरासकत्वासम्भवेन व्यवहारविशेषणत्वस्यावश्यकत्वात् ।

प्रतीयमानधर्मिगतवस्तुज्ञानं यथार्थख्यातिः । भ्रमविषये हि शुक्त्यादौ रजतमस्त्येव, त्रिवृत्करणेन तत्रानुप्रविष्टतेजोंशस्य शुक्लभास्वररूपेण परिणामविशेषवतो रजतसामान्यदर्शनेन, "इदं सर्वमसृजत, यदिदं किंचे"ति श्रुतितः प्रतीयमानानामीश्वरकर्तृकसृष्टिविषयत्वावगमेन, "सोमाभावे पूतीकानभिषुणुयादि" त्यादिप्रतिनिधिविधिना सोमसदृशपूतीकादौ सोमशास्त्रार्थभूतसोमजातीयसद्भावं ज्ञापयता तत्सदृशे तत्सद्भावस्य फलितत्वेन च शुक्त्यादौ रजतादिग-

द्भावनिर्णयात्। शुक्त्यवयवानां भूयस्त्वेन शुक्त्यादिव्यपदेशो रजतादिव्यपदेशश्चोपपन्नौ । दोषविशेषेणादृष्टविशेषेण वा बहूनामपि तेषां तिरस्कारात्, अल्पस्यापि रजतावयवादेर्ग्रहणमुपपन्नम्। विजातीयबह्वयवाभिभूततया तस्य कार्यकरत्वाभावश्चेति । स्वरूपतो विषयतश्चागृहीतभेदं ज्ञानद्वयमख्यातिः । विशेष्यतावच्छेदकविरोधिधर्मभानमन्यथाख्यातिः । निरुक्तख्यातित्रयसाधारणं विपर्ययत्वं बाध्यव्यवहारजनकत्वरूपम्, उक्तेषु सर्वेष्वपि पक्षेषु व्यवहारबाधस्य विपर्ययस्थले सम्प्रतिपत्तेः ।

न च प्रमालक्षणस्य स्मृतावतिव्याप्तिः, तस्या अपि प्रमात्वात् । न चैवं प्रमाणत्रैविध्यकथनविरोधः । प्रत्यक्षादिमूलायास्तस्याः स्वमूलभूतप्रत्यक्षान्तर्भावेन मूलभूतप्रत्यक्षप्रामाण्याधीनप्रामाण्यायाः स्वातन्त्र्याभावेन च स्वतन्त्रप्रमाणत्रैविध्यकथनविरोधाभावात् । करणं च व्यापारवत्कारणम् । न चैवमात्ममनस्संयोगरूपव्यापारशालिन्यात्मनि इन्द्रियसंयोगवति विषये, आत्मसंयोगलक्षणव्यापाराश्रये शरीरे च प्रमाणलक्षणस्यातिव्याप्तिरिति वाच्यम्, अनुभवत्वसाक्षाद्व्याप्यर्यत्किंचिद्धर्माश्रयाशेषजन्यज्ञानवृत्त्यन्यावृत्तिकार्यतानिरूपितकारणताश्रयत्वे सति व्यापारवत्त्वस्य प्रमाणत्वशब्दार्थतयोक्तदोषाभावात् । शरीरात्मादिकारणतानिरूपितकार्यतायाः प्रत्यक्षत्वाद्याश्रयाशेषजन्यज्ञानेतरवृत्तित्वात्, विषयनिष्ठकारणतानिरूपिकार्यतायास्तादृशाशेषज्ञानवृत्तित्वाभावात् ।

न चैवमीश्वरस्य प्रमाणत्वं न स्यात्, प्रमाकरणत्वाभावादिति वाच्यम्, अस्मदीयसाम्प्रदायिकानां कुत्रापीश्वरे प्रमाणत्वव्यवहारादर्शनेन तस्येष्टत्वात् । यदि च "आप्तःप्रामाण्यादि" ति सूत्रे "तन्मे प्रमाणं शिव" इत्यादौ च गौतमोदयनाचार्ययोरीश्वरे प्रमाणत्वव्यवहारादस्मदाचार्यैरप्रतिषिद्धत्वाच 'अनुक्तमप्रतिषिद्धमनुमत'मिति न्यायेनेश्वरः प्रमाणमित्यभ्युपगम्यते, तदा नित्यप्रमाश्रयत्वाभावविशिष्टनिरुक्तप्रमाकरणत्वाभावरहितत्वं प्रमाणलक्षणं बोध्य

म्; ईश्वरे प्रमाकरणत्वाभावरूपविशेष्यवति नित्यप्रमाश्रयत्वाभाव रूपविशेषणाभावेन विशिष्टाभावसत्त्वान्नाव्याप्तिः। नित्यप्रमाश्रयत्वाभावरूपविशेषणवतीन्द्रियादौ प्रमाकरणत्वाभावरूपविशेष्याभावेन विशिष्टाभावरूपलक्षणसम्बन्धः। अलक्ष्येषु प्रमाश्रयादिषु नित्यप्रमाश्रयत्वाभावरूपविशेषणस्य प्रमाकरणत्वाभावरूपविशेष्यस्य च सत्त्वेन विशिष्टाभावरूपलक्षणानन्वयश्च। न च नित्यमुक्तेषु नित्यप्रमाश्रयेषु निरुक्तलक्षणसत्त्वादतिव्याप्तिः; निरुपाधिकनित्यप्रमाश्रयत्वस्यात्र विवक्षितत्वात्। नित्यमुक्तानां तादृशप्रमाश्रयत्वस्य भगवन्नित्येच्छाधीनत्वेन निरुपाधिकत्वाभावान्न तेष्वतिव्याप्तिः। केचित्तु— तेषामीश्वरवदेव नित्यप्रमाश्रयत्वेन प्रामाण्यमस्त्येवेति नातिव्याप्तिरित्याहुः। तच्च प्रमाणं त्रिविधम्— प्रत्यक्षानुमानागमभेदात्। न चोपमानार्थापत्त्यनुपलब्ध्यैतिह्यसम्भवरूपप्रमाणानां सत्त्वात्कथं त्रैविध्यसिद्धिरिति वाच्यम्, तेषां यथायथमुक्तेष्वन्तर्भावस्य वक्ष्यमाणत्वेन त्रैविध्यसिद्धेः। तथा च मनुनोक्तम्—

" प्रत्यक्षमनुमानं च शास्त्रं च विविधागमम्।
त्रयं सुविदितं कार्यं धर्मसिद्धिमभीप्सता ॥" इति।

विविधागमरूपं शास्त्रमित्यर्थः। स्मृतीतिहासपुराणोपबृंहितमित्यपि शास्त्रं विशेष्टव्यम्, तादृशस्यैव वेदस्य प्रमितिजनकत्वात्।

" पुराणन्यायमीमांसाधर्मशास्त्राङ्गमिश्रिताः।
वेदाः स्थानानि विद्यानां धर्मस्य च चतुर्दश ॥"

इतियाज्ञवल्क्यस्मृत्या तथाविधस्य सम्यग्ज्ञानजनकतायाः प्रतीतेश्च। तथा देवलेनापि त्रयमेवोक्तम्—

" प्रत्यक्षानुमोपदेशाः प्रमाणानि " इति।

प्रमितिरपि त्रिविधा—प्रत्यक्षानुमितिशाब्दभेदात्। तत्र ज्ञानाकरणकं ज्ञानं प्रत्यक्षम्। ईश्वरप्रत्यक्षस्य नित्यतया असदादिज्ञानस्य चेन्द्रियकरणकतया ज्ञानाकरणकत्वेन प्रत्यक्षमात्रे लक्षणसमन्वयः। अनुमित्यादेश्च व्याप्त्यादिज्ञानकरणकत्वेन न तेषु लक्षणसङ्गतिः।

न च जन्यमात्रस्यादृष्टद्वारा ज्ञानकरणकतया जन्यप्रत्यक्षेऽव्याप्तिः, अदृष्टद्वारा श्रीवेङ्कटेश्वरमूर्तिप्रत्यक्षकरणकेऽभीष्टसाक्षात्कारे, निदिध्यासनद्वारा श्रवणादिज्ञानकरणके मोक्षादिसाक्षात्कारे, आहार्यारोपद्वारा प्रतियोगिज्ञानकरणके अभावप्रत्यक्षे, कोटिस्मृतिद्वारा धर्मिज्ञानकरणके संशये चाव्याप्तिः ; ज्ञानाकरणकपदेन ज्ञाननिष्ठकरणतानिरूपितानुभवत्वसाक्षाद्व्याप्यधर्मावच्छिन्नकार्यताश्रयभिन्नत्वस्य विवक्षितत्वेन उक्तदोषाभावात् । उक्तस्थलेषु कार्यत्वाभीष्टसाक्षात्कारत्वमोक्षजनकसाक्षात्कारत्वाभावप्रत्यक्षत्वसंशयत्वाद्यन्यतमावच्छिन्नकार्यताया एव सत्त्वेनानुभवत्वसाक्षाद्व्याप्यभूतप्रत्यक्षत्वावच्छिन्नकार्यताया अभावात् ।

न च स्मृतौ स्मृतिव्यतिरिक्तत्वघटितानुभवत्वसाक्षाद्व्याप्यधर्मावच्छिन्नकारणताविरहादतिव्याप्तिः, स्मृतित्वरहितत्वेन विशेषणात् ।

तच्च प्रत्यक्षं द्विविधम्— ऐश्वरमनैश्वरं चेति । न चेन्द्रियजन्मनः प्रत्यक्षस्येन्द्रियशून्ये भगवति सम्भवाभावः शङ्कनीयः, "पश्यत्यचक्षुःसभृणोत्यकर्ण" इति श्रुत्या तत्सिद्धेः । अनैश्वरप्रत्यक्षं द्विविधम्— योगिप्रत्यक्षमयोगिप्रत्यक्षं चेति । तत्र योगिप्रत्यक्षं प्रकृष्टादृष्टविशेषजन्यम् । तत् युक्तावस्थायां मनोमात्रजन्यम्, वियुक्तावस्थायां बाह्येन्द्रियजन्यमपि । स चादृष्टविशेषो योगाभ्यासतपश्चर्यादिभिर्जायते । तच्च योगिप्रत्यक्षकरणभूतं बाह्यमिन्द्रियं दिव्यम् . "दिव्यं ददामि ते चक्षुरि" त्याद्यनुसारात् । आत्मतत्त्वज्ञानादेः स्वप्रकाशत्वात् मानसप्रत्यक्षं नास्तीति वृद्धसम्प्रदायः । पुनः प्रत्यक्षं द्विविधम्— सविकल्पकं निर्विकल्पकं चेति । तत्रानुवृत्तिविषयं ज्ञानं सविकल्पकम् । अनुवृत्तिश्च संस्थानरूपजात्यादेरनेकव्यक्तिवृत्तिता । सा च कालतो देशतश्च भवति । यथा अयं घटः— अयमपि घटः, पूर्वं घटः— इदानीमपि घटः, इत्येवं जात्याद्यनुवृत्तिविषयतया यज्ज्ञानं जन्यते तत्सविकल्पकम् । अनुवृत्त्यविषयं ज्ञानं निर्विकल्पकम्, यथा एकस्यां व्यक्तौ प्राथमिकं घटत्वप्रकारकं ज्ञानम् ।

अत्र केचित्— इदमपि सविकल्पकमेव, सप्रकारकत्वात्; निष्प्रकारकमेव हि ज्ञानं निर्विकल्पकम्। न च तत्र मानाभावः, एतज्जन्याद्यकालीनं देवदत्तादिविशिष्टज्ञानं जन्यविशेषणज्ञानजन्यम्, जन्यविशिष्टज्ञानत्वात्, दण्डीति विशिष्टज्ञानवदित्यनुमानस्यैव मानत्वात्; न चेदमप्रयोजकम्, साध्यपदार्थोपस्थित्यादेः साध्यपदार्थादिरूपविशेषणज्ञानविशेषस्यानुमितिशाब्दाद्यात्मकविशिष्टज्ञानविशेषे हेतुत्वनिश्चये यद्विशेषयोरिति न्यायेन विशिष्टज्ञानत्वावच्छिन्नं प्रति विशेषणज्ञानत्वेन हेतुत्वनिश्चयात् कार्यकारणभावस्यैव विपक्षे बाधकत्वात्; न च कारणतया सिद्ध्यद्विशेषणज्ञानं विशेष्यस्मृतेरूपमिति वक्तुं शक्यम्, जन्मान्तरसंस्कारवशात्स्मृतिकल्पनस्यात्यन्तागतिकस्य सत्यां गतावयोगात्। अपूर्वदेवदत्तादेर्जन्मान्तरानुभवाचेदानीं विशिष्टानुभवाभावेन तदधीनायाः स्मृतेरयोगाच्च; कित्वनुभवरूपमेव, अनुभवसामग्र्याः सत्त्वात्; तच्च प्राग्विशेषणज्ञानासत्त्वेन न विशिष्टज्ञानरूपं किंतु निष्प्रकारकमेवेति निष्प्रकारकनिर्विकल्पकसिद्धिरित्याहुः। तन्न, उक्तानुमानादेव निर्विकल्पकस्मृतेरपि सिद्ध्यापत्तेः, विशेषणज्ञानजन्यतावच्छेदकस्य विशिष्टज्ञानत्वस्य तत्रापि सत्त्वात्। न च पूर्वानुभवो विशेषणज्ञानत्वेन तत्र कारणम्, संस्कारेण व्यवहितत्वात्। न च संस्कारस्तस्य कारणीभूतस्य व्यापारः? स एव हि तस्य व्यापारः- यं विना यद्धर्मावच्छिन्नं न जनयति, न हि विशेषणज्ञानत्वावच्छिन्नं संस्कारं विना विशिष्टं ज्ञानं न जनयति! धाराबाहिकस्थले विनैव संस्कारं पूर्वेणोत्तरजननात्। न च संस्काराणां विशिष्टस्मृतावेव सामर्थ्यात् न निर्विकल्पकस्मृतिः, विशिष्टानुभवत्वस्य कार्यतावच्छेदकत्वाच्च न व्यभिचार इति वाच्यम्; सन्निकर्षादीनामपि विशिष्टज्ञानजनन एव सामर्थ्यान्न निर्विकल्पकानुभवः, कालविशेषावच्छिन्नविशिष्टज्ञानत्वस्य विशेषणज्ञानजन्यतावच्छेदकत्वाच्च व्यभिचार इत्यपि वक्तुं शक्यत्वात्। किंच स्मृतावतिप्रसङ्गभिया

भवत्वविशेषितं जन्यविशिष्टज्ञानत्वं विशेषणज्ञानजन्यतावच्छेदकं वाच्यम्, तथा च तदपेक्षया लाघवाज्जन्यानुभवत्वमेव तदवच्छेदक मस्तु, तथा च निर्विकल्पकत्वेनाभिमतमपि विशेषणज्ञानजन्यं तत एव विशिष्टज्ञानं चेति न निष्प्रकारकनिर्विकल्पकसिद्धिः । न चैव मनवस्था, क्वचिद्विशिष्टज्ञानस्य स्मृतित्वेन विशेषणज्ञानानपेक्षणात् । अतोऽनुवृत्तिविषयं ज्ञानं सविकल्पकम्, तदनवगाहिज्ञानं निर्विकल्पकमिति ।

नन्वन्धस्यापि सविकल्पकादिज्ञानोदयापत्तिः; न चेन्द्रियस्य कारणतया न तदापत्तिरिति वाच्यम्, कुड्यादिव्यवहितघटग्रहणस्य तथाप्यापत्तेरिति चेन्न;–द्रव्यग्रहे इन्द्रियसंयोगस्य, तद्गतरूपादि ग्रहे इन्द्रियसंयुक्ताधेयतायाः, रूपादिगतवस्तुग्रहे इन्द्रियसंयुक्ताधेया धेयतायाश्च प्रत्यासत्तितया कारणत्वाभ्युपगमेनोक्तापत्तेरयोगात् । न संयुक्तसमवायः प्रत्यासत्तिः, समवायासिद्धेः ।

न च नीलादिविशिष्टबुद्धिः सम्बन्धविषयिणी, विशिष्टबुद्धित्वात्, दण्डीति विशिष्टबुद्धिवत्– इत्यनुमानाल्लाघवसहकृतात् एको नित्यस्समवायः सिद्ध्यतीति वाच्यम्;–समवायाभ्युपगमेऽपि समवायाविशेषेण अवयवावयव्यादिष्वाधाराधेयभावव्यवस्थानुपपत्त्या वाय्वादिषु समवायसत्त्वेन रूपाधारत्वतद्वत्ताप्रतीत्योरापत्त्या च रूपादिविशिष्टप्रतीतिस्थले रूपादिनिरूपितस्वरूपसम्बन्धस्य तद्धानस्य चावश्यकत्वेन तत एव तत्प्रतीत्युपपत्तावतिरिक्तस्य समवायरूप धर्मिणस्तत्सम्बन्धित्वस्य गुभूरुते रूपादिनिरूपितसमवायत्वे रूपादि सम्बन्धतावच्छेदकत्वस्य च कल्पनायामत्यन्तगौरवात् । तस्मात्र संयुक्तसमवायादिः प्रत्यासत्तिः ।

अस्मिन् सविकल्पकनिर्विकल्पकरूपे ज्ञाने इन्द्रियं तत्संयोगो वा कारणमिति केचित् । निर्विकल्पकमात्रे इन्द्रियं तत्संयोगो वा करणमन्यत्र ज्ञानं करणम् । न चैवं

तस्य प्रत्यक्षत्वं न स्यादिति वाच्यम् , ज्ञानकरणक-
त्व नियतानुभवत्वसाक्षाद्व्याप्यधर्मवत्त्वस्य प्रत्यक्षलक्षणत्वात्। तस्य
च ज्ञानकरणकेऽपि सविकल्पकज्ञाने सत्त्वात्। एवं विधसाक्षात्कारत्वा
श्रयज्ञानकरणं प्रत्यक्षप्रमाणम्। न चैवमीश्वरेऽव्याप्तिः। तस्य प्रामाण्यं
नास्तीत्युक्तत्वात्। यदि चाप्रतिषिद्धमन्यत्रासिद्धमनुमतमिति न्या-
येन तस्य प्रामाण्यमभ्युपगम्यते, न निर्विशेषं सामान्यमिति न्यायेन
प्रत्यक्षप्रमाणान्तर्भावश्च स्वीक्रियते, तदापि नानुपपत्तिः , नित्य
प्रत्यक्षाश्रयत्वाभावविशिष्टप्रत्यक्षप्रमितिकरणताविरहरहितत्वस्य प्र-
त्यक्षप्रमाणलक्षणत्वात् । ईश्वरेऽपि विशेषणाभावप्रयुक्तविशिष्टा-
भावसत्त्वेनाव्याप्त्यभावादिति दिक् ।

॥ इति प्रत्यक्षनिरूपणम् ॥

## अथानुमानं निरूप्यते ।

अनुमितिकरणमनुमानम्। अनुमितिश्च ज्ञानकरणकत्व नियत
शाब्दावृत्त्यनुभवत्वसाक्षाद्व्याप्यधर्मवती । प्रत्यक्षत्वस्य ज्ञानकरण
कत्वनियतत्वाभावात् , शब्दस्य शाब्दवृत्तित्वात् न तयोरतिव्या-
प्तिः। अनुमितित्वस्य ज्ञानकरणकत्वव्याप्यत्वात् , शाब्दावृत्तित्वा
च्चानुमितौ लक्षणसमन्वयः ।

न चानुमाननिरूपणस्य प्रत्यक्षनिरूपणपूर्वभावः शब्दनिरू-
पणोत्तरभावो वा किं न स्यादिति वाच्यम् , व्याप्त्यादिग्रहणस्य
प्रत्यक्षसापेक्षत्वेन शब्दशक्तिग्रहस्य चानुमान सापेक्षत्वेन
प्रत्यक्षनिरूपणपूर्वभावागमनिरूपणानन्तरभावयोरप्रसङ्गात् ।

नन्वनुमानं न प्रमाणम् , व्यभिचारसंशयेन व्याप्ते
र्ग्राहकाभावेन दुर्वचनत्वेन च व्याप्तिज्ञानासम्भवात् ; किं चानुमान
विषयः पर्वतीयवह्निं न साधयति तेन व्याप्त्यभावात् , न च वह्नि
त्वावच्छिन्नसामान्यम् , तस्य सिद्धत्वात् ; ज्ञानप्रत्यासत्तिसहकृतमन
सैव वह्न्यादिभानोपपत्तौ अतिरिक्तप्रमाणकल्पनायां गौरवं चेति
चेन्न ; हेतूपन्यासेनानुमाननिरासे स्ववचनविरोधापत्तेः । त्वदुक्तहेतु

भिर्व्याप्तिज्ञानासम्भवरूपहेतौ व्याप्तिनिश्चयाभावेन ततोऽनुमानप्रामाण्याभावसाधनायोगात् । तत्र व्याप्तिग्रहाभ्युपगमे व्यभिचारसंशयव्याप्तिग्राहकाभावदुर्वचत्वादिभिर्व्याप्तिज्ञानासम्भवोक्तयनुपपत्तेरिति । व्याप्तेश्च ग्राहको व्यभिचारज्ञानाभाव इन्द्रियसन्निकर्षादिश्च । तर्काच्च उपाधिज्ञाननिरासे कारणाभावाद्यभिचारसंशयाभावः । न च तर्कमूलभूतव्याप्तौ व्यभिचारशङ्कानिरासाय तर्कान्तरापेक्षायामनवस्था, क्वचित्तर्कमूलभूतव्याप्तौ स्वक्रियाव्याघातेन कोटिसरणाद्यभावेन वा शङ्कानुदये तर्कापेक्षाविरहेणानवस्थाभावात् । यत्र तर्कापेक्षा तत्र तर्कद्वारा । भूयोदर्शनमपि व्याप्तिग्रहे प्रयोजकम् । न तु व्याप्तिग्रहे व्यभिचारज्ञानाभावेन्द्रियसन्निकर्षादिवत्सहचारदर्शनमपि कारणम्, व्यभिचारज्ञानाभावेन्द्रियसन्निकर्षादौ सति सहचारज्ञानविलम्बेन व्याप्तिग्रहविलम्बाभावात् ।

न च विरुद्धस्थले व्याप्तिभ्रमं प्रति सहचारभ्रमस्य दोषतया हेतुत्वसिद्धौ यद्विशेषयोरिति न्यायेन व्याप्तिग्रहमात्रे सहचारज्ञानस्य हेतुत्वसिद्धिरिति वाच्यम्, अवृत्तिसाध्यकविरुद्धे व्याप्तिभ्रमस्य व्यभिचारभ्रमादेवोपपत्त्या अवृत्तिहेतुके च तस्य धूलिमत्त्वभ्रमादुपपत्त्या च सहचारभ्रमदोषत्वस्यैवासिद्धेः । नापि व्याप्तेर्दुर्वचत्वम्, साध्यतावच्छेदकसम्बन्धघटितसम्बन्धेनाशेषधूमाधिकरणवृत्तिसाध्यतावच्छेदकविशिष्टसाध्यसामानाधिकरण्यं व्याप्तिरिति निर्वचनात् । वह्निसंयोगरूपसाध्यतावच्छेदकसम्बन्धघटितस्वाश्रयसंयोगसम्बन्धेनाशेषधूमाधिकरणवृत्ति वह्नित्वम्, तद्विशिष्टसामानाधिकरण्यं धूमस्येति व्याप्यता । धूमसंयोगघटितपरम्परासम्बन्धेन धूमत्वं न वह्नयधिकरणाशेषवृत्तीति न व्यभिचारिण्यतिव्याप्तिः । यद्वा—अशेषसाधनाधिकरणगोचरसाध्यवत्त्वप्रकारकप्रमाविषयसाध्यसामानाधिकरण्यं व्याप्तिः । अस्ति चेदं सद्धेतौ धूमादौ, सर्वे धूमवत् वह्निमत् इति प्रमायास्सत्त्वात् । न च व्यभिचारिणि, सर्वे वह्निमद्धूमवदिति प्रमा-

या अभावात्, अयोगोळके धूमाभावात्। अतो न व्याप्तिर्दुर्वचा। नापि
किंचेत्यादिदूषणमवतरति, विशेषेण व्याप्तिग्रहाभावेऽपि सामान्यतो
व्याप्तिग्रहेण पक्षधर्मताख्यसहकारिविशेषसहकृतेन विशेषसिद्धिरि
ति यथा दर्शनमभ्युपगमे दोषाभावात् । नापि मनसान्यथासिद्धिः,
बहिः पदार्थे मनःस्वातन्त्र्याभावात् । अन्यथा चाक्षुषादिज्ञानासि-
द्ध्या बाह्यमान्तरमिति विभागानुपपत्तेः । तस्मात्प्रमाणमनुमानम् ।

अनुमितिकरणं च परामर्शः, तस्य चरमकारणतया प्रमायो
गव्यवच्छेदकत्वात् । व्यापारवत्कारणं कारणमिति पक्षे परामर्श-
जनकं व्याप्तिज्ञानं पक्षधर्मताज्ञानं वा परामर्शजनकत्वेन करणम् ।
परामर्शस्य व्यापारतया व्यापारान्यत्वगर्भान्यथासिद्धिलक्षणा-
भावात् नान्यथासिद्धिः ।

न च विशेषणज्ञानस्याहेतुत्वाद्व्याप्तिज्ञानं परामर्शे न कारण
मिति वाच्यम्,—विशिष्टवैशिष्ट्यज्ञाने विशेषणतावच्छेदकप्रकारकज्ञा
नस्य हेतुत्वाभ्युपगमेन विशेषणतावच्छेदकीभूतव्याप्तिज्ञानस्य हेतुत्व
सिद्धेः । वस्तुतः परामर्शजनकत्वेनैव करणता, नातः परामर्शजन-
कज्ञानाभावात्स्मृतिलक्षणपरामर्शस्थलेऽनुमित्यभावापत्तिः । अनुमि-
तिः सकरणिका-क्रियात्वादित्यनुमानेन लाघवसहकृतेनानुमितौ मन
सः कारणत्वं कश्चिदाह; तन्न-मनसोऽनन्तत्वेन तदपेक्षया एकत्वेन
लघुभूते काल एव कारणत्वसिद्ध्या ततो मनसः करणत्वासिद्धेः । न
लिङ्गं तत्करणम्, अतीतादिस्थले व्यभिचारेण हेतुत्वस्यैवासिद्ध्या क
रणत्वासिद्धेः । किंच न व्यभिचारज्ञानाभावादनुमितिसम्भवः, त-
स्मिन् सति व्याप्तिज्ञानविधुराणामनुमित्यदर्शनात्। व्याप्तिज्ञानस्याज
नकत्वे व्यभिचारग्रहस्य जनकज्ञानविघटकत्वाभावेन विरोध्यविषय-
तया च प्रतिबन्धकत्वासिद्ध्या तदभावस्य हेतुत्वायोगाच्च व्या-
प्तिज्ञानं करणमित्यवश्यं वाच्यम् । तथा च तेनान्यथासिद्धं
लिङ्गं न कारणम्, कुतः करणम्? अतो व्याप्तिज्ञानं परामर्शो वा-
नुमितिकरणम् ।

इदं च व्याप्तिज्ञानं उपाधिज्ञाने सति न भवतीत्युपाधिज्ञानाभावो व्याप्तिग्रहे प्रयोजकः। उपाधिश्च साध्यव्यापकत्वे सति साध्यव्यभिचारिसाधनाव्यापकः। अत्र महानसत्वावच्छिन्नवह्निव्यापकधूमाव्यापकव्यञ्जनवत्त्वस्योपाधित्ववारणाय साध्यव्यभिचारीति साधनविशेषणम्। धूमश्च न साध्यव्यभिचारीति नातिव्याप्तिः। साधनावच्छिन्नसाध्यव्यापके पक्षधर्मावच्छिन्नसाध्यव्यापके चोपाधौ शुद्धसाध्यव्यापकत्वाभावेऽपि साध्यव्यापकत्वमस्त्येवेति न तत्राव्याप्तिः। अयं चोपाधिः साध्यव्यापकत्वसाधनाव्यापकत्वनिश्चयेन निश्चितः तदन्यतरसन्देहेन तदुभयसन्देहेन वा सन्दिग्धश्चेति द्विविधः। प्रथमे उपाध्यभावोपाधिव्यभिचारित्वोपाध्यव्याप्यत्वेषु साध्याभावसाध्यव्यभिचारित्वसाध्याव्याप्यत्वान्यतमव्याप्यत्वनिश्चयेन साध्याभावसाध्यव्यभिचारित्वसाध्याव्याप्यत्वान्यतमप्रत्यक्षमन्यतमानुमितिर्वा जायत इति न साध्यानुमितिः न साध्यव्याप्तिप्रत्यक्षं वा उदेतुमर्हति, ग्राह्याभावनिश्चयात्। न च व्याप्तिप्रत्यक्षे न व्यभिचारानुमितिः प्रतिबन्धिका, ग्राह्याभावप्रत्यक्षस्यैवान्यत्र ग्राह्यप्रत्यक्षप्रतिबन्धकत्वकल्पनादिति वाच्यम्, फलबलेन पक्षताघटकसंशयान्यव्यभिचारज्ञानत्वेन लघुतया प्रतिबन्धकत्वकल्पनेनानुमितेरपि प्रतिबन्धकत्वसिद्धेः। अन्यथा ग्राह्यसंशयस्यान्यत्र प्रतिबन्धकत्वादर्शनेन व्यभिचारसंशयस्यापि प्रतिबन्धकत्वानापत्त्या सन्दिग्धानैकान्तिकोच्छेदापत्तेः। परामर्शानन्तरजातस्य त्वधिकबलत्वे पूर्वपरामर्शेऽप्रामाण्यशङ्कोदयेन तच्छून्यपरामर्शरूपकारणविघटकतया बाधोत्थापकतया प्रतिबन्धकता, समबलत्वे सत्प्रतिपक्षतया प्रतिबन्धकत्वम्। द्वितीये च बाधसन्देहेन व्यभिचारादिसन्देहान्नानुमितेरुदयः, व्याप्तिप्रत्यक्षस्यैव ग्राह्यसन्देहस्याप्युपाध्याहितस्य प्रतिबन्धकत्वात्। तथा चोपाधिज्ञानं व्याप्तिज्ञाने प्रतिबन्धकमिति तन्निरासोऽपि तत्र कारणम्। तत्र योग्यानां केषांचित्साधनव्यापकत्वनिश्चयेन केषांचित्साध्याव्याप-

कत्वनिश्चयेन निरासः सुलभः । अयोग्यस्य तु प्रत्यक्षे हेतौ प्रथममेव साध्यव्याप्यत्वनिश्चयादतीन्द्रिये च प्रमाणान्तरेण साध्यव्याप्यत्वनिश्चयात् हेतोस्साध्यव्याप्यताग्राहकतर्कावतारे व्याप्याव्यापकत्वेन व्यापकाव्यापकत्वनिश्चयसम्भवाच्च निरासस्सुलभः । न च भूयोदर्शनादिना व्यभिचारज्ञाननिरासे सन्निकृष्टे महानसधूम एव व्याप्तिग्रहो न पर्वतधूम इति कथं ततोऽनुमितिः? परामर्शाभावादिति वाच्यम्,—महानसीयधूमे धूमत्वावच्छेदेन व्याप्तिग्रहे पर्वतधूमे धूमत्वदर्शनेन स्मृतव्याप्तेरुपनीतप्रत्यक्षात्मकपरामर्शसम्भवादिन्द्रियसंयुक्तसामान्याश्रयत्वरूपेन्द्रियसन्निकर्षेण संयोगसन्निकर्षाश्रयमहानसधूम इव पर्वतधूमेऽपि तदानीमेव व्याप्तिग्रहसम्भवेन परामर्शसम्भवाच्च। न चात्र मानाभावः, आबालगोपालमानुमानिकव्यवहारानुपपत्तेरेव मानत्वात्। न ह्यानुमानिकव्यवहारो नास्तीति वा स च व्यवहारो व्याप्तिज्ञानमन्तरेण सम्भवतीति वा वक्तुं शक्यम्? लोकोपलम्भविरोधात्। अकारणकार्योदयप्रसङ्गाच्च। नापि प्रकारान्तरेण व्याप्तिग्रह इति वक्तुं शक्यते? तत्रापि त्वदुक्तदोषप्रसङ्गात्। केनापि प्रकारेण व्याप्तिज्ञानं न सम्भवतीति वक्तुं न शक्यते, सर्वानुमानोच्छेदे व्याप्तिभञ्जकानुमानजनकव्याप्तेरपि बाधेन विवक्षितासिद्धेः। घटो नास्तीति बुद्धेः यावद्विशेषाभावविषयताया वा अतिरिक्तसामान्याभावविषयिण्या वा अशेषविशेषप्रतियोगिकविषयतयाऽशेषप्रतियोगिज्ञानजन्यत्वात् अशेषप्रतियोगिनां च निरुक्तसम्बन्धमन्तरेण ज्ञातुमशक्यत्वात् तत्सिद्धिरिति।

तच्चानुमानं द्विविधम्—अन्वयव्यतिरेकिकेवलान्वयिभेदात्। अन्वयव्यतिरेकिसाध्यकमन्वयव्यतिरेकि। यथा पर्वतो वह्निमान्धूमादित्यादि। अत्राभावप्रतियोगि वह्न्यादि साध्यम्, अन्वयव्यतिरेकव्याप्ती च स्तः, गृह्येते च। केवलान्वयि च एकरूपसम्बन्धेन सर्ववृत्तिसाध्यकम्। यथा घटोऽभिधेयः प्रमेयत्वादि-

त्यादि । अत्र साध्यं प्रमेयत्वं सर्ववृत्ति । न चैवं विप्रतिपत्तिसन्देहयोरभावात् केवलान्वयि नानुमानमिति युक्तम्, साध्याभावकोटिकसन्देहाभावेऽपि प्रमेयत्वमत्र वर्तते न वेत्याकारकस्य सम्भवेनानुमानप्रवृत्त्यविरोधात् ।

न चानुमानद्वैविध्यमयुक्तम्, व्यतिरेक्यनुमानसत्त्वादिति वाच्यम्, अनुमानत्वेन पूर्वोक्तयोर्व्याप्तिविशिष्टपक्षधर्मताज्ञानतद्धेतुव्याप्तिज्ञानयोस्तत्राभावात् । न च व्यतिरेकसहचारज्ञानेनान्वयव्याप्तिग्रहात् नोक्तदोष इति युक्तम्, अन्यसहचारज्ञानान्यव्याप्तिग्राहकत्वेऽतिप्रसङ्गात् । न च व्यभिचारज्ञानाविरोधिसहचारज्ञानत्वेन हेतुत्वेन नातिप्रसङ्ग इति युक्तम्, क्वचित्सहचारग्रहेऽपि अधिकरणान्तरे व्यभिचारग्रहेण तस्य तद्विरोधित्वासिद्धेः । न च सहचारग्रहविषयीभूताधिकरणे तद्विवक्षितमिति युक्तम्, घटवद्वह्निसहचारग्रहे धूमाभावघटसहचारग्रहे च तदधिकरणे वह्न्यभावधूमगर्भव्यभिचारग्रहासम्भवेनातिप्रसङ्गतादवस्थ्यात् । न च साध्याभावहेतुरूपदलद्वयान्यतरवत्तया उपस्थिताधिकरणे तद्विरोधित्वं विवक्षितमित्युक्तस्थले वह्न्यभाववत्तया धूमवत्तया वा नोपस्थितिरिति नातिप्रसङ्ग इति युक्तम्, केवलान्वयिनि साध्याभावाप्रसिद्ध्या निरुक्तसहचारज्ञानासम्भवेन व्याप्तिग्रहानापत्तेः । तस्माल्लाघवेन स्वसहचारज्ञानत्वेन स्वव्याप्तिज्ञानं प्रति कारणत्वं वाच्यमिति न व्यतिरेकिणि कारणसम्भवः । एतेनान्वयव्यतिरेकव्याप्तिज्ञानसाधारणं व्याप्तिज्ञानत्वं कारणतावच्छेदकं अन्वयपरामर्शे, व्यतिरेकपरामर्शे च विशेषसामग्री व्याप्तिज्ञानत्वावच्छिन्नं व्यतिरेकव्याप्तिज्ञानम्, व्यतिरेकपरामर्शश्च व्यतिरेकिणि स इति निरस्तम्, व्याप्तिज्ञानत्वस्यातिप्रसक्त्या व्यभिचाराज्ञानविरोधिव्याप्तिज्ञानत्वेन हेतुत्वकल्पनायां सामग्रीद्वयकल्पनायां चात्यन्तगौरवेण च लाघवेन स्वव्याप्तिज्ञानत्वेनैव व्याप्तिज्ञानस्य हेतुताया वाच्यत्वात्, तस्य च व्यतिरेकिण्यसम्भव एवेति न

यन्यं न जानीमः यत्किञ्चिज्जानीयामित्यादिकायां वा इच्छाया पक्षतासत्त्वात् अनुमितिरिति । सिसाधयिषाविरहविशिष्टसिद्ध्यभावस्तु न पक्षपदप्रवृत्तिनिमित्तम्, गौरवात्। किंच सिद्ध्यभावस्य पक्षतात्वे विपक्षेऽपि पक्षतापत्तिः । न च तत्र पक्षपदप्रयोगोऽस्ति? तस्मान्न सिध्यभावः पक्षता ।

साध्यवत्तया निश्चयविषयः सपक्षः । पक्षः पक्षसमो वा न साध्यवत्तया निश्चयविषयो नापि विपक्ष इति न तेष्वतिप्रसङ्गः । उदाहरणं धूमानुमाने महानसादिः । सपक्षत्वं च तत्सत्त्वमात्रम्, न तु व्यापकत्वरूपम्, धूमादावव्याप्तेः । स्वसाध्याभाववद्वृत्तिरहितत्वं विपक्षव्यावृत्तिः । यथा धूमानुमाने महाह्रदादिः । इदं च विपक्षव्यावृत्तत्वं केवलान्वयिन्यप्यस्ति, केवलान्वयिनि स्वसाध्याभावाप्रसिद्ध्या विपक्षाभावात् । स्वसाध्याभाववद्वृत्तित्वं अयं घटो द्रव्यत्वात् इत्यादौ प्रसिद्धम्— तद्राहित्यं केवलान्वयिन्यपि । यस्य प्रबलतया ज्ञायमानेन ग्राह्याभावनिश्चयः स बाधितविषयः, यथा धूमानुमाने महाह्रदादिः । ज्ञायमानत्वविशेषणात् आभासस्यापि बाधकत्वसिद्धिः । समबलतया प्रतीयमानप्रमाणोपरोधाभावोऽसत्प्रतिपक्षत्वम् । विरुद्धविषयप्रमाणयोर्वस्तुतः समबलत्वाभावात् प्रतीयमानत्वपदम् ।

पुनर्द्विविधमनुमानम्— स्वार्थं परार्थं चेति । स्वतस्सिद्धं स्वार्थम्, परवाक्यपूर्वं परार्थम् । स्वतः प्रवृत्तसामग्रीजन्यं स्वतस्सिद्धम्, परवाक्यप्रवृत्त्या प्रयोज्यपरामर्शजन्यं परवाक्यपूर्वकम् । तदुक्तं तत्त्वरत्नाकरे "सर्वं प्रमाणसामग्र्या स्वत एव प्रवृत्तया जन्यते परवाक्येन वृत्तया चेति हि द्विधा । अतोऽनुमानं द्विविधं स्वपराख्यत्वभेदतः ।" इति । अनुमानप्रयोजकं वाक्यं प्रतिज्ञादिपञ्चावयववाक्यम् । तत्र पक्षतावच्छेदकावच्छिन्नस्य साध्यविधायकवाक्यं प्रतिज्ञा । उदाहरणवाक्यातिव्याप्तिवारणाय-

पक्षतावच्छेदकावच्छिन्नस्येति। निगमनातिव्याप्तिवारणाय साध्यविधायकमिति। उदाहरणं पर्वतो वह्निमानिति। हेतुत्वप्रकाशकविभक्त्यन्तलिङ्गवचनं हेत्ववयवः। यथा धूमादिति। उदाहरणवाक्यव्यावर्तनाय हेतुत्वप्रतिपादकविभक्त्यन्तत्वविशेषणम्। निगमनव्यावर्तनाय प्रतिपादकपदं विहाय प्रकाशकपदम्। तस्यानुवादकत्वान्नातिव्याप्तिः। व्याप्तिप्रदर्शनपूर्वकं दृष्टान्तवचनमुदाहरणम्। तच्च द्विविधम्—अन्वयव्यतिरेकभेदात्। यो यो धूमवान् सोऽग्निमान् यथा महानस इत्यन्वयोदाहरणम्। योऽनग्निः स न धूमवान् यथा महाह्रद इति व्यतिरेकोदाहरणम्। व्याप्यस्य पक्षसम्बन्धबोधकं वचनमुपनयः। यथा वह्निव्याप्यधूमवानयं पर्वत इति। हेत्वभिधानपूर्वकं पक्षे साध्यस्योपसंहारकं वाक्यं निगमनम्। यथा तस्मादग्निमानिति। अवयवपञ्चकमपि प्रयोक्तव्यमिति गौतमीयाः। उदाहरणान्तमुदाहरणादि वा। अवयवत्रयमेव प्रयोक्तव्यमिति मीमांसकाः, उदाहरणोपनयावेवेति सौगताः। भाष्यकारभट्टारकगुरुप्रभृतिभिरनियमेन प्रयुक्तत्वादनियम इति।

कश्चित्तर्कोऽप्यनुमानाङ्गम्। स द्विविधः—व्याप्तिग्राहको विषयपरिशोधकश्चेति। धूमो यदि वह्निव्यभिचारी स्याद्वह्निजन्यो न स्यादित्याद्यः। पर्वतस्य वह्न्यभावे शङ्किते यदि वह्निर्न स्यात्तर्हि धूमोऽपि न स्यादिति द्वितीयः। अयं हि धूमाभावरूपानिष्टप्रसञ्जनमुखेन वह्न्यभावसाधकशङ्कानिरासकतया वह्न्यनुमित्युपकारकः। अनभिमतव्यापकप्रसजनं तर्कः। तस्य द्वौ विषयौ—प्रामाणिकपरित्यागः—अप्रामाणिकस्वीकारश्चेति। उपासितो देवो यदि फलप्रदो न स्यात् तर्हि अर्थिभिर्न सेव्येतेति प्रामाणिकपरित्यागः। यदि पीतममृतं दाहकं स्यात् मामपि पीतं दहेत् इत्यप्रामाणिकस्वीकारप्रसङ्गः। स पञ्चविधः—आत्माश्रयेतरेतराश्रयचक्रिकाश्रयानवस्थानिष्टप्रसङ्गभेदात्। तर्कस्य

पञ्चाङ्गानि—आपाद्यापादकयोर्व्याप्तिः । प्रतितर्केरप्रतिहतिः । एवं चेदेवं स्यात् न चैवमिति प्रसञ्जनीयस्य विपर्यये पर्यवसानम् । प्रसञ्जनीयस्यानिष्टत्वम्, प्रतिपक्षाबाधकत्वलक्षणमननुकूलत्वं चेति । उक्ताङ्गेष्वन्यतमहीनस्तर्काभासः । यथा—यदि पानीयं पिपासां न शमयिष्यति तदा द्रवद्रव्यमपि नाभविष्यत्, शिलावत् इत्यनुमानम् ।

## अथ शब्दो निरूप्यते ।

शाब्दप्रतीतिकरणं शब्दः । भ्रमाजन्यवाक्यजन्यज्ञानं शाब्द
प्रमा । अयोग्यवाक्यजन्यज्ञानेऽतिव्याप्तिवारणाय भ्रमाजन्येति वा-
क्यविशेषणम् । अबाधितार्थकं लौकिकं वाक्यं न भ्रमजन्यमिति
तज्जन्यप्रमायां तदजन्यवाक्यजन्यत्वमस्ति, वेदस्य नित्यतया
तज्जन्यप्रमायामपि भ्रमाजन्यवाक्यजन्यत्वमस्तीत्युभयत्र लक्षण
समन्वयः । न च न शब्दः प्रमाणमिति वक्तुं शक्यम् ।
एतद्वाक्यस्याबाधितविषयत्वेऽबाधितार्थकशब्दप्रामाण्यसिद्धेः । एत-
स्य बाधितविषयत्वे च बाधात् । अपक्षत्वेऽनैकान्त्यात् । सकल
सामग्रीविशिष्टस्य शब्दस्य सकलसहकारिविशिष्टचक्षुरादिवत्प्रमाक
रणत्वेन प्रामाण्याविरोधात् । शब्दात्प्रत्येमीत्यबाधितानुभवाच्च ।
न चानुमानान्तर्गतः, एकपदार्थविशेषणकापरपदार्थविशेष्यकसंस-
र्गमर्यादया संसर्गविषयकप्रतीतेरनुमानादिनासंभवात् । इमानि
पदानि तात्पर्यविषयस्मारितपदार्थसंसर्गज्ञानपूर्वकाणि—आकाङ्क्षा
दिमत्पदकदम्बकत्वात्—इत्यनुमितेः पदविशेष्यकत्वात् संसर्गप्रका
रकत्वात्, एते पदार्थाः तात्पर्यविषयसंसर्गवन्तः इत्यनुमितेः
सर्वार्थविशेष्यकत्वात् संसर्गप्रकारकत्वात्, कर्मत्वं घटवत् तदा-
काङ्क्षापदस्मारितत्वादित्यनुमानस्थानभिमतसंसर्गसिद्ध्यार्थान्तरप
राहतत्वात् । नानुमितः—न साक्षात्कृतः—किं तु शब्दाच्छ्रुत इति

विपरीतानुभवाच्चेति। प्रमितिकरणं चाकाङ्क्षायोग्यतासत्तिमत्पद समुदायात्मकं वाक्यम्। आकांक्षायोग्यतासन्निधीनां—आकाङ्क्षा च *विभक्तिविशेषसमभिव्याहारः*। स च क्रियाकारकभावान्वयबोधे भिन्नविभक्तिसमभिव्याहारः। तेन घटः कर्मत्वमित्यादौ नान्वयबोधः। अभेदान्वयबोधे समानविभक्तिसमभिव्याहारः, नीलो घटः नीलं पटमित्यादौ। योग्यता च बोध्यसंसर्गेणैकपदार्थेऽपरपदार्थवत्त्वम्। वह्निना सिञ्चतीत्यादौ निरूप्यत्व संसर्गेण सेकक्रियायाः करणत्ववत्त्वाभावान्न योग्यता। अन्वय विरोधिव्यवधानाभावः आसत्तिः। गिरिर्भुक्तमग्निमानित्यादौ पर्वताग्न्यन्वयविरोधिभुक्तपदव्यवधानमस्तीति नासत्तिः। तत्राकाङ्क्षासत्त्योर्ज्ञानं शाब्दकारणम्, तद्भ्रमात् शाब्दबोधदर्शनात्, तदभावसंशये तद्व्यतिरेकनिश्चये च शाब्दबोधप्रतिबन्धाच्च। यद्यपि योग्यतायाश्च ज्ञानं सा वा न कारणम्, अयोग्यत्वेन ज्ञातप्रतिवादिवाक्यादन्वयबोधदर्शनात्। अन्यथा कथाया बधिर कलहत्वापत्तेः; अत एवायोग्यतानिश्चयाभावोऽपि न कारणम्। तथापि योग्यता प्रमाजनकतावच्छेदकतया प्रमाणशब्देनापेक्षणीयैव। पदं च प्रामाणिकपदव्यवहारविषयः, तेन गाव्याद्यपभ्रंशे नातिव्याप्तिः। [*ज्ञान एवात्र पदव्यवहारात्.] वाच्यतया पदविषयत्वं घटादेरप्यस्तीति व्यवहारपदम्। गाव्यादिशब्दे पदव्यवहारः

> "नामरूपं च भूतानां कृत्यानां च प्रपञ्चनम्।
> वेदशब्देभ्य एवादौ देवादीनां चकार सः॥"

इति वचनादवगम्यते। वाक्यं द्विविधम्— पौरुषेयमपौरुषेयं चेति, पुरुषेच्छया रचितं वाक्यं पौरुषेयम्। तच्च वाक्यमाकांक्षादिमदन्वितार्थम्। यथा, कृष्णस्य भवने शतं रत्नानि

* पदज्ञानमेवात्र पदशब्देन व्यवह्रियत इति भावः॥

सन्तीत्यादि । आकांक्षादिरहितमनन्वितार्थं न वाक्यम् । गौ-रश्वः पुरुष इत्यादि । अपौरुषेयं सर्वमन्वितार्थमेव । न च "आदित्यो यूपः" "यजमानः प्रस्तर" इत्यादौ नान्वितार्थत्वम्, यूपादित्ययोरैक्याभावादिति वाच्यम्;—मुख्यार्थस्य तदभावेऽपि औप चारिकाऽर्थस्य तत्सम्भवात् । शब्दस्य वृत्तिर्द्विधा— अभिधावृत्तिः, उपचारवृत्तिश्चेति । तत्र व्युत्पत्तिसिद्ध एवार्थे वृत्तिरभिधावृत्तिः. अजहल्लाक्षणिकादिवारणाय एवकारः । सा च त्रिविधा । रूढिर्योगो योगरूढिश्चेति । अखण्डशक्ती रूढिः । यथा—गोघटादिशब्देषु । अवयवशक्तिर्योगः । यथा—पाचकादिशब्देषु । अवयवशक्तिसापेक्षा योगरूढिः । यथा—पङ्कजशब्दादिषु । न च पङ्कजपदं यौगिकमेव न रूढमिति युक्तम् । किं पङ्कजपदशक्यमिति प्रश्ने प्राज्ञानां प्रतिवचनदर्शनात्, पङ्कजं पद्ममिति सह प्रयोगाभावात्, पद्मे पङ्कजपदसमुदायस्य शक्तिग्राहकवृद्धव्यवहारापेक्षादर्शनात्, अवय-वव्युत्पत्तिरहितानां समुदाये व्युत्पत्तिग्रहणे पद्मप्रतीतेः, अवयव-शक्तेः कुमुदसाधारण्येन रूढिं विना कुमुदे पङ्कजपदप्रयोगप्र-तीत्योर्वारयितुमशक्यत्वाच्च रूढिसिद्धेः । न च रूढ्या कथं तत्र तयोर्निवारणमिति वाच्यम्.—विरोध्यविषयाया अपि रूढेरन्वय व्यतिरेकाभ्यां प्रतिबन्धकत्वकल्पनात् । रूढ्या शीघ्रोपस्थिते पद्मएवावयवार्थान्वयबोधेन निराकाङ्क्षतया तत्प्रतीत्यनुपपत्तेश्च । उपचारवृत्तिरपि द्विधा—लक्षणा गौणी चेति । तत्र लक्षणा शक्य सम्बन्धादन्यत्र वृत्तिः; यथा—गङ्गायां घोष इत्यादौ गङ्गादि पदस्य तीरादौ । न च तत्र शक्तिरेव न स्वीक्रियत इति शङ्क्यम्, गङ्गां पश्येत्युक्ते तीरं नीरं चेति संशयादर्शनात्, तीरादाविव कदाचिदन्यत्रापि प्रयोगेण तत्रापि शक्तौ शक्या-शक्यविभागानुपपत्तेश्च । द्विरेफं पश्येत्यादौ लक्षितलक्षणापि लक्ष-णैव शक्यरेफद्वयवत्त्पदबोध्यत्वरूपसम्बन्धात्मा, शक्ये रेफद्वयव

भ्रमरपदे दर्शनकर्मत्वप्रतिपादनासम्भवेन शक्यभ्रमरपदघटितनिरुक्तसम्बन्धेन पदपद एव तस्य वृत्तेः।

सा द्विधा—जहल्लक्षणा अजहल्लक्षणा चेति। आद्या शक्यावृत्तिलक्ष्यतावच्छेदकवती। गङ्गायां घोष इत्यत्र तीरे लक्षणा, तीरत्वस्य लक्ष्यतावच्छेदकस्य शक्यावृत्तित्वात्। द्वितीया शक्याशक्यसाधारणलक्ष्यतावच्छेदकवती, यथा काकेभ्यो दधि रक्ष्यतामित्यत्र काकपदलक्षणा, तत्र लक्ष्यतावच्छेदकस्य दध्युपघातुकत्वस्य शक्यकाकाशक्यबिडालादिसाधारणत्वात्। गङ्गायां घोष इत्यत्र गङ्गापदाद्गङ्गातीरत्वेनैव तीरबोधः। न च वृत्तिद्वयविरोधः, गङ्गायां घोषो मत्स्यश्चेत्यत्र वृत्तिद्वयदर्शनेनात्रापि तत्सम्भवात्।

लक्षणाबीजं क्वचिन्मुख्यार्थानुपपत्तिः क्वचित्तात्पर्यानुपपत्तिरिति केचित्। सर्वत्रान्वयानुपपत्तिरेव बीजम्, अन्यथाननुगमात्। न चानुगतसम्भवेऽननुगतकल्पनं युक्तम्। यष्टीः प्रवेशयेत्यादावपि प्रकरणादिना प्रवेशयेति पदस्य भोजनानुकूलप्रवेशनार्थकत्वनिर्णयेन यष्ट्यादिरूपमुख्यार्थे तदनुपपत्तिरस्त्येव॥

लाक्षणिकमप्यनुभावकमेव, अनुभवार्थमेव लक्षणावृत्तेः कल्पनात्। तस्याः स्मृतिमात्रार्थत्वे कार्यकारणभावादेरिव वृत्तित्वाभावप्रसङ्गात्॥

. न च शब्दानुकूलस्मृतिहेतुत्वमात्रेण वृत्तित्वमिति शङ्क्यम्। उक्तस्मृतिहेतुत्वेऽपि वृत्तित्वादेस्तन्त्रत्वेनान्योन्याश्रयात्। किञ्च घोषपदादनुभवामीत्यनुभवेन गङ्गापदात्स्मराम्येवेत्यननुभवेन च लाक्षणिकस्यास्याप्यनुभावकत्वं सिद्धम्॥

गौणी च शक्यगतगुणजातीयगुणवत्त्वरूपसादृश्यादन्यत्र वृत्तिः। यथा सिंहो देवदत्त इत्यत्र सिंहशब्दस्य सिंहगतपराक्रमजातीयगुणाश्रये देवदत्ते। न च सादृश्यमपि मुख्यार्थसम्-

न्धरूपमेवेति गौण्यपि लक्षणैवेति शङ्कनीयम्, चन्द्रसदृशे मुखे चन्द्रसम्बन्धिमुखमिति व्यवहाराभावेन सादृश्यस्य सम्बन्धत्वाभावात्। सम्बन्धत्वेऽपि सादृश्यात्मनैव तन्निमित्ततया सम्बन्धत्वेन निमित्तत्वाभावाच्च। सम्बन्धत्वेन निमित्तं हि लक्षणा। लक्षणा गौणी च द्वे अपि निरूढानिरूढभेदेन द्विविधे। निरूढत्वं च पदविशेषसमभिव्याहारेऽर्थविशेषेऽनादितात्पर्यम्। यथा मृद्वादिषु गौणो गवादिशब्दः, मञ्चाः क्रोशन्तीत्यादौ मञ्चशब्दः। अनिरूढस्तु—सिंहो देवदत्तः गङ्गायां घोष इत्यादौ सिंहशब्दो गङ्गाशब्दश्च। एतास्ता अपि वृत्तयः शब्दस्यान्विताभिधाने सहकारिण्यः। तस्मादादित्यो यूपः, यजमानः प्रस्तर इत्यादीनामपि गौण्या वृत्त्या निर्वाहः॥

तदेवमपौरुषेयं वाक्यं मन्त्रैमन्वितार्थमेव। वाक्यं च विध्यर्थवादादिभेदाद्बहुविधम्। विधिश्चापूर्वनियमपरिसङ्ख्याविधिभेदात्त्रिधा। यस्य विध्यप्रवृत्तौ कालत्रयेऽपि न प्राप्तिस्तत्प्रापको विधिरपूर्वविधिः। यथा—"व्रीहीन्प्रोक्षतीति"। एतद्विध्यभावे प्रोक्षणस्य यागीयव्रीहिषु कदाप्यप्रवृत्तेः। विध्यभावे आक्षेपप्राप्तिकस्याप्राप्तांशे परिपूरणफलको विधिर्नियमविधिः। यथा व्रीहीनवहन्तीत्यत्र। एतद्विध्यभावेऽपि व्रीहीणां पुरोडाशप्रकृततया साधनीभूतानां तण्डुलनिष्पत्त्याक्षेपादेवावघातप्राप्तेर्न तदर्थे विधिः, किं त्वाक्षेपाविशेषादवघातवन्नखविदलनाद्यपि प्राप्नुयादित्यवहन्तेनैवेत्यप्राप्तांशपरिपूरणं क्रियते। इतरनिवृत्तिफलको विधिः परिसङ्ख्या विधिः। यथाग्निचयने "इमामगृभ्णन्नशनामृतस्येत्यश्वाभिधानीमादत्त" इत्यग्निचयनेऽश्वरशनाग्रहणं गर्दभरशनाग्रहणं चेति द्वयमप्यनुष्ठेयम्, तत्र लिङ्गाविशेषात् गर्दभरशनाग्रहणेऽपि मन्त्रः प्राप्नुयादिति तन्निवृत्त्यर्थो विधिः॥

सिद्धार्थप्रतिपादकमर्थवादवाक्यम्—"वायुर्वै क्षेपिष्ठादेवता"

"सत्यं ज्ञानमनन्तं ब्रह्मे" ति। अत्र प्रवर्तकज्ञानाजनकतया साक्षादननुष्ठापकोऽर्थवादस्तु विधिशेषतया। प्रवर्तकं च कार्यताज्ञानमिति गुरुः, कृतिसाध्येष्टसाधनताज्ञानमिति नैयायिकाः, इष्टसाधनताज्ञानमेव प्रवर्तकं—कृत्यसाध्यताज्ञानं प्रतिबन्धकमिति नैयायिकैकदेशिनः, भावनाज्ञानं प्रवर्तकमिति भाट्टाः, कृतिसाध्यताज्ञानं प्रवर्तकमिति सिद्धान्तिनः, कृतिसाध्येष्टसाधनताज्ञानमित्यपि केचित्। तत्र कार्यत्वमेव लिङ्पदशक्यविधिः। न त्विष्टसाधनत्वविशेषितम्, गौरवात्। पच पाकं कुरु, यज, यागं कुरु इति। कुत्रा विवरणाविवरणदर्शनादनुशासनानुरोधाच्च। इष्टसाधनत्वस्य शक्यत्वे "सर्वेभ्यः कामेभ्य" इति चतुर्थ्यनन्वयः, "दर्शपूर्णमासाभ्या"मिति तृतीयानन्वयः। न हि सर्वफलाय याग इष्टसाधनमिति सम्भवति। नापि दर्शपूर्णमासेन याग इष्टसाधनमिति, साधनत्वमात्रस्य विधिनैव बोधितत्वात्, करणत्वज्ञानस्य प्रवृत्तावनुपयोगात्। तृतीयावैयर्थ्यं च। अयं च विधिरनुष्ठापकात्मा केवलोऽनुष्ठानापर्याप्तः त्रीनंशानपेक्षते किमर्थं किं कथमिति। न हि निष्फलो भाव्यः, नापि फलं साक्षाद्भाव्यम्, न च प्रकारमजानन् किंचित्करोतीति। तथा च ओदनकामः पाकं तदुचितप्रकारेण कुर्यादितिवद्वेदेऽपि तथैव जिज्ञासाबोधने। तत्र किमर्थमित्याकाङ्क्षा स्वर्गकामपदेन, किमित्याकाङ्क्षा यजिपदेन, कथमित्याकांक्षा चाङ्गविधिना पूर्यते। सर्वफलाय यागः कार्य इत्यर्थकेन "सर्वेभ्यः कामेभ्य" इत्यादिनोक्तप्रकारः सम्यक् ज्ञायते। "अग्निहोत्रमि"त्यादिना च दर्शपूर्णमासनामकेन देवताराधनं कार्यमित्यर्थप्रतिपादनाय तृतीया सप्रयोजनेति दिक्॥

पदज्ञानं पदार्थस्मृतिद्वारा शाब्दबोधकारणम्। न तु स्मारितः पदार्थः, अतीतानागतरूपस्य स्मृतौ शाब्दबोधे च हेतुत्वासम्भवात्। किं च वाक्यार्थस्याशाब्दत्वभिया पदानामप्यन्वये

शक्तिः कल्प्या, तथा पदानां पदार्थे, पदार्थानां वाक्यार्थे इति शक्तित्रयं कल्प्यमिति गौरवम् ॥

न चाकांक्षादिसहकारिलभ्यतयान्वये न शक्तिः, अनन्य लभ्य एव शक्तिकल्पनादिति वाच्यम्,—शब्दस्य करणभूतस्य चक्षुरादेरिव विषयप्रत्यासत्तिविरहे क्रियाजनकत्वानुपपत्त्या पदा नामन्वयरूपविषये प्रत्यासत्त्यन्तराभावेन वृत्तेरेव प्रत्यासत्तित्व सिद्धेः अन्यलभ्येऽपि तत्कल्पनावश्यम्भावात्। अन्यथा क्लृप्त-प्रत्यासत्त्यभावेऽपि कार्योदये धूमज्ञानसहकारिवशादसन्निकृष्टे वह्न्यादौ चाक्षुषज्ञानापत्तेः। यदि च सन्निकर्ष एव चाक्षुषविषयत्वहेतुः तदा वृत्तिरेव शाब्दविषयत्वहेतुरिति समम्। किं च घटमिति कारकपदात् क्रियान्वयसामान्यानभिधाने सामान्य-ज्ञानरूपकारणाभावेनान्वयविशेषजिज्ञासानुपपत्तिः। न च जम्बी-रादौ रूपविशेषाक्षिप्ते रससामान्ये रसविशेषस्येवान्वयसामान्याक्षेपे ऽन्वयविशेषस्य जिज्ञासोपपत्तिरिति युक्तम्, रसादेश्चक्षुरयोग्यत्व-निश्चयेन तत्काले आक्षेपावतारकल्पनेऽपि, इहशब्दप्रमाणायोग्यत्व-निश्चयाभावेन तत्पदोच्चारणकाले नियमेन व्यभिचारादर्शनसहचार दर्शनादिरूपभिन्नसामग्रीमूलकाक्षेपावतारकल्पनस्यानौचित्यात्। त-स्मात् पदानामितरान्वितस्वार्थेऽनुभवानुकूला शक्तिः ॥

घटपदस्य घटत्वविशिष्टे स्मारिका शक्तिः। वाक्यार्थश्च क्वचित्सि द्धरूपः क्वचित्साध्यरूपः। आद्यो यथा नीलोऽयं घटः, पुत्रस्ते जात इत्यादौ। द्वितीयो यथा—घटमानय, ज्योतिष्टोमेन स्वर्गकामो यजेतेत्यादि। यदाह भगवान्भाष्यकारः—"कार्यार्थ एव व्युत्प-त्तिरिति निर्बन्धो निर्निबन्धन" इति। सर्वाण्यपौरुषेयवाक्यानि स्वतः प्रमाणान्येव, अनादिनिधनाविच्छिन्नसम्प्रदायासम्भाव्य-मानदोषत्वात्। अनादिनिधनाविच्छिन्नसम्प्रदायत्वं च, "अनादि-निधना ह्येषा वागुत्सृष्टा स्वयंभुवे" ति वचनादवगम्यते ॥

एतेन वेदस्यासम्भाव्यमानदोषसर्वविषयसाक्षात्कारवदीश्वरप्रणीततया प्रामाण्यं न स्वत इति वेदप्रामाण्यान्यथानुपपत्त्यैवेश्वरसिद्धिरिति वदन्तो निरस्ताः, "वाचा विरूप नित्यया' 'तस्य ह वा एतस्य महतो भूतस्य निःश्वसितमेतद्यदृग्वेदो यजुर्वेदस्सामवेदः' 'ऋचो यजूंषि सामानि' "सा हि श्रीरमृता सतामि" त्यादि श्रुतिभ्यः, "धर्ममूलं वेदमाहुर्ग्रन्थराशिमकृत्रिमम्। स्वयम्भूरेष भगवान्वेदः" इत्यादिस्मृतिभ्यश्च वेदस्य नित्यत्वावगमात्। समर्थितं चेदं वेदानां नित्यत्वं "अत एव च नित्यत्वमि"त्यत्र पाराशर्येण। न च अर्थवादे, "अग्नेऋग्वेदः, वायोर्यजुर्वेदः, आदित्यात्सामवेदः" इति वेदानामग्न्यादिजन्यत्वावगमाद्विरोधश्शङ्कनीयः, पूर्वसिद्धानेव ऋग्वेदादीननधीत्यैव स्वरतो वर्णतश्चास्खलितानपश्यन्निरत्येतदर्थकतया विरोधाभावात्, अत एव "ऋचस्सामानि जज्ञिरे" "मन्त्रकृतो वृणीते" इत्यादेरपि न विरोधः, न च चिरकालिकत्वाभिप्रायेण चातुर्मास्यफलनित्यत्वकथनवदिदं नित्यत्ववचनमिति किं न स्यादिति वाच्यम्,—"वेदार्थे यः स्वयं ज्ञातः तत्र शङ्का भवे" दिति, ऋषिभिः परिगीतेऽर्थे का शङ्का स्यान्महात्मनः "स्वबुद्धिकल्पितन्यायात् बलीयो ह्युपबृंहण"मित्यादिना स्वबुद्धिकल्पितन्यायकल्प्यार्थापेक्षया ऋषिप्रोक्ता प्रबलोपबृंहणसिद्ध एवार्थो वेदानां ग्राह्य इत्यवगमेन "अकृत्रिमं वेदं" इति वचनानुसारेणैवार्थस्य वाच्यत्वात्, तस्माद्वेदस्य नित्यतया कारणदोषाभावाद्बाधकप्रत्ययाभावाच्च कृत्स्नोऽपि वेदः प्रमाणम्।

न च कार्यपराणामेव प्रामाण्यात् सिद्धब्रह्मपरवेदान्तवाक्यानां न प्रामाण्यमिति शङ्कनीयम्, उपासनाविधिदर्शनेन तदेकवाक्यताभ्युपगतानां तेषां कार्यपरत्वस्यापि सम्भवात्, कार्यपराणामेव प्रामाण्ये रघुकृतं काव्यमित्यादिवाक्यानां प्रामाण्या-

तदभिमानिदेवताभूतसङ्कर्षणाद्यवतारविषयत्वाच्च पाञ्चरात्रप्रामाण्यसिद्धेः॥

स्मृतिर्वेदमूला, तदाह शङ्खः, "सर्वा एव ता वेदमूला दृष्टार्थान्परित्यज्ये"ति॥

"दुर्बोधा वैदिकाः शब्दाः प्रकीर्णत्वाच्च ये खिलाः।
तज्ज्ञैस्त एव स्पष्टार्थाः स्मृतिस्तन्त्रे प्रतिष्ठिताः॥"

इति सति वेदे स्मृतिप्रणयनस्य सार्थक्यं प्रदर्शितम्। इतिहासपुराणयोः—"इतिहासपुराणाभ्यां वेदं समुपबृंहयेत्। बिभेत्यल्पश्रुता"दिति वचनेन वेदमूलकत्वमुक्तम्, शिष्टाचारः शिष्टवचनं च प्रमाणम्, "वेदोऽखिलो धर्ममूलं स्मृतिशीले च तद्विदाम्। आचारश्चैव साधूनामि"ति मनूक्तेः, "यं शिष्टा ब्राह्मणा ब्रूयुः स धर्मस्स्यादशङ्कित" इत्युक्तेश्च। श्रुतिस्मृत्याचारेषु पूर्वं पूर्वं बलीयः। स्मृतिषु मनुस्मृतिर्बलीयसी। "मन्वर्थविपरीता तु या स्मृतिस्सा न शस्यत" इति वचनात्। "यद्वै किं च मनुरवदत्" इति श्रुतिश्च। पुराणेषु सात्त्विकम्, सात्त्विकेषु वैष्णवं पुराणं बलीयः,

"पुराणसंहिताकर्ता भवान्वत्स भविष्यति।
देवतापारमार्थ्यं च यथावद्वेत्स्यते भवान्॥"

वसिष्ठपुलस्त्यवरप्रदानलब्धदेवतापारमार्थ्यज्ञानवत्तया परिगृहीतपराशरप्रणीतत्वात्।

तदेवम्,
"प्रत्यक्षं चानुमानं च शास्त्रं च विविधागमम्।
त्रयं सुविदितं कार्यं धर्मसिद्धिमभीप्सता॥"

इत्याप्तोक्तं प्रमाणत्रयं निरूपितम्, अर्थापत्तिसम्भवैतिह्योपमानान्यत्रैवान्तर्भवन्ति, अनुपपद्यमानेन तदुपपादकर्थान्तरकल्पनमर्थापत्तिः, यथा जीवतो गृहासत्त्वेन बहिस्सत्त्वं विनाऽनुपपद्यमानेन बहिस्सत्त्वकल्पनम्, इदं च देवदत्तो बहिरास्ते जीवित्वे सति गृहासत्त्वात्, यः जीवित्वे सति गृहेऽसन् स तदन्यत्र वर्तते, यथाहमित्यनुमानेनैव सिद्ध्यति। न चोपरि सवितारं विनानुपपद्यमानेन भूमिगतालोकेन पश्चिमदेशगतवृष्टिं विना पूर्वदेशीयप्रवाहोनुपपन्न इति ज्ञानादुपरि सवितृकल्पनम्। पश्चिमदेशे वृष्टिकल्पनं च यत्र तदनुमानात्सिद्ध्यति, सामानाधिकरण्यज्ञानाद्यभावेनानुमानाप्रवृत्तेरिति वाच्यम्;— अनुमाने हि यद्देशे यस्य सत्त्वं यद्देशीययत्सत्त्वाधीनं तेन तत्सिध्यति, तथा च पक्षे साध्यसम्बन्धोपपादकसम्बन्धप्रतियोगिज्ञानं समानाधिकरणव्यधिकरणसाधारणमनुमितिकारणम्, भूम्यालोकसम्बन्ध आकाशे साध्यभूतसूर्यसम्बन्धप्रयोज्य इति ज्ञानसत्त्वात् गगनं सूर्यवत् भूम्यालोकात्— इत्यनुमानमवतरति, पर्वते वह्निसम्बन्धः पर्वतधूमसम्बन्धप्रयोज्य इति ज्ञानसत्त्वात् पर्वतो वह्निमान्धूमादित्यनुमानमवतरतीत्यर्थापत्तिरनुमानेनान्यथासिद्धैव; शतं सहस्रे सम्भवतीति सम्भवोऽपि अनुमानेनान्यथासिद्धः, सहस्रसङ्ख्या स्वन्यूनशतसङ्ख्याधिकरणव्यतिरिक्तेन सह तदधिकरणवर्तिनी तदधिकसङ्ख्यात्वात्,— एकत्वाधिकद्वित्वसङ्ख्यावत्—इत्यनुमानावतारसम्भवात्।

उपमानमप्यनुमानान्तर्भूतमेव, तथाहि—यथा गौस्तथा गवय इति श्रुतातिदेशवाक्यस्य पश्चाद्वनं गतस्य वाक्यानुभूतगोसादृश्यस्य गवये यत्प्रतिसन्धानं तदुपमानम्। अयं गवयपदवाच्य इति वाच्यवाचकभावज्ञानमुपमितिः, इयं च गवयत्वविशिष्टो धर्मी गवयपदवाच्यः नियमेन तत्र प्रयुज्यमा-

नत्वात्, यच्छब्दो यत्र नियमेन प्रयुज्यते स तच्छब्दवाच्यः, यथा गोघटादयः ॥

मिथ्यावादिनश्चाभावाख्यम्पदार्थान्तरमङ्गीकृत्य तद्ग्रहणायानुपलब्ध्याख्यं प्रमाणान्तरमामनन्ति, अभावस्य पदार्थान्तरत्वेऽपि संयुक्तविशेषणताख्यस्योभयाभ्युपेतस्येन्द्रियप्रत्यासत्तित्वरूपधर्ममात्रकल्पनेन चक्षुरादीन्द्रियेणाभावग्रहोपपत्तावनतिरिक्तप्रमाणकल्पना गौरवपराहता । वस्तुतो नाभावोऽतिरिक्तः, क्लृप्तेनोभयाभ्युपेतेनाभावाश्रयतया पराभ्युपगताधिकरणतत्कालसम्बन्धादिनाऽभावप्रतीत्युपपत्तावतिरिक्ताभावकल्पनाया गौरवात्, अन्यथाऽभावाभावस्याप्यतिरिक्तस्य कल्पनापत्तेः, संयुक्तावस्थकपालं तत्कालसम्बन्धो वा घटप्रागभावः भग्निष्पन्नकपालं तत्कालसम्बन्धो वा घटनाशः घटशून्यभिन्नभूतलं तत्कालसम्बन्धो वा घटात्यन्ताभावः । यस्मिन्नवगते, इतरतादात्म्यारोपो न भवति तदेव भेदः । स च नीलपीतगुणेषु तत्स्वरूपमेव, तत्स्वरूपावगमे सत्यन्यतादात्म्यारोपायोगात् । घटादौ तु पटादिभेदो घटत्वमेव, स्वरूपावगमेऽप्यन्यतादात्म्यारोपदर्शनात्,— घटत्वावगम एव तन्निवृत्तेः । अतो घटस्येतरभेदो घटत्वमेव । तस्याप्यन्यस्माद्भेदस्तत्स्वरूपमेव, अतो नानवस्था, अतोऽभावस्यैवाभावत्वात् तद्ग्रहणं प्रत्यक्षेणैव भवतीति नानुपलब्धिः प्रमाणान्तरमिति ॥

प्रमाणनिरूपणं समाप्तम् ॥

—:*:—

एवं प्रमाणे निरूपिते तस्मात्पुरुषधौरेयेश्वरसिद्धिः । तत्र प्रत्यक्षान्नेश्वरसिद्धिः, रूपादिरहितेऽतीन्द्रिये तस्याप्रवृत्तेः । नाप्यनुमानात्तत्सिद्धिः, तथाविधानुमानाभावात् ।

ननु यावत्कार्यं सकर्तृकं कार्यत्वात् घटवदित्यनुमानमेव तत्साधकम्, अत्र घटादावंशतः सिद्धसाधनवारणाय यावत्कार्यत्वं पक्षतावच्छेदकमुक्तम्, यावत्कार्यत्वाधिकरणे सकर्तृकत्वासिध्या न सिद्धसाधनमिति चेन्न;—हविराद्युपादानगोचरादृष्टद्वारा कतिपयानुकूलज्ञानवतास्मदादिना सिद्धसाधनात् । घटादावदृष्टाद्वारकज्ञानादिमज्जन्यत्वस्य घटादौ दृष्टस्य च साधने दृष्टत्वाविशेषात् कर्मवश्यत्वविशेषितकर्तृजन्यत्वस्यापि सिध्यापत्तिः । न च कर्मपारवश्यादिकं "न कर्मणा वर्धते नो कनीयानि"ति श्रुतिसाधितं न सिध्यतीति शङ्कनीयम्, गुणाष्टकमात्राधिकरणेश्वराभ्युपगन्तृणामानन्दादिश्रुतेरिवाकर्मवश्यत्वश्रुतेरप्यन्यपरत्वसम्भवात्, किं च उक्तानुमानात् ज्ञानवज्जन्यत्वसिद्धावपि न सर्वविषयकज्ञानसिद्धिः । न च लाघवेन नित्यज्ञानसिद्धौ नियतविषयत्वव्यापककारणाधीनत्वनिवृत्त्या नियतविषयत्वनिवृत्तौ सर्वविषयकत्वसिद्धिरिति वाच्यम्, तथा सति चिकीर्षाया अपि नित्यायास्सर्वविषयकत्वापत्त्या नित्यपारिमाण्डल्याविषयकत्वप्रसङ्गेन तद्विषयचिकीर्षाकृतिभ्यां पारिमण्डल्यादिकमुत्पादयितुं तेन कार्यान्तरं जनयितुं न शक्यमितीश्वरस्य सत्यसङ्कल्पत्वभङ्गापत्तेः ।

न च कार्यत्वेन ज्ञानादित्रयजन्यत्वसिद्धौ ज्ञानोपादानयोः कारणीभूतयोः कुलालीयज्ञानघटोपादानयोरवधारितो विषयविषयिभाव एव प्रत्यासत्तिरिति क्षित्याद्युपादानविषयापरोक्षज्ञानसिद्धौ तदाश्रयो नास्मदादिरिति न सिद्धसाधनमिति वाच्यम्;—अदृष्टजनकहविरादिज्ञानादिषु क्लृप्तस्यादृष्टद्वारकतत्तदुपादानसम्बन्धस्यैव तदुभयप्रत्यासत्तित्वसम्भवे विषयविषयिभावस्यान्यत्र क्लृप्तत्वदृष्टत्वाभ्यां तदुभयसम्बन्धत्वमाश्रित्य क्षितिस्थलेऽवक्लृप्तादृष्टद्वारकतदुभयसम्बन्धशालिनं हविराद्युपादानगो

चरज्ञानादिकं परित्यज्यात्यन्तापरिदृष्टनित्यज्ञानादिकल्पनायोगात्। यच्च सकर्तृकत्वानुमानज्ञानादिमज्जन्यत्वानुमानाभ्यां लाघवानुगृहीताभ्यां कर्त्रेकत्वज्ञानाद्येकत्वसिद्धिरितीश्वरसिद्धिरिति, तत्रैकत्वसिद्धिरित्येकत्वसङ्ख्याविशिष्टसिद्धिरभिमता, अनेकत्वाभावविशिष्टसिद्धिर्वा? आद्येऽनेकत्वसिद्धावप्येकत्वविशिष्टसिद्धिरस्त्येवेति सिद्धसाधनं दुर्वारमेव, अन्त्ये न लाघवम्, अनुमितेरनेकत्वाभावविषयतया गौरवात्। न चाग्रे वस्तुलाघवसिद्ध्यर्थं लाघवसहकृतमनुमानं विषयगौरवमनुमन्यत इति युक्तम्, तथा सति लाघवतर्कसहकृतस्य लिङ्गज्ञानकारणताग्राहकस्य ज्ञानद्वयस्थले विशिष्टज्ञानकल्पनया वस्तुलाघवसिध्यर्थं व्याप्यतावच्छेदकप्रकारकज्ञानत्वावच्छिन्नकारणताविषयकत्वापत्तेः। किञ्च शरीरजन्यतावच्छेदकं कर्तृजन्यत्वम्, लाघवात्, न तु घटत्वादिकम्, गौरवात्, तथा च क्षित्यादौ शरीरजन्यत्वाभावात् न कर्तृजन्यत्वसिद्धिः। न च कर्तृजन्यतावच्छेदकं घटत्वादिकं कल्पनीयमिति तवापि गौरवं तुल्यमिति वाच्यम्,—एतद्गौरवसाम्येऽपि त्वन्मते ज्ञाननिष्ठेन्द्रियजन्यतावच्छेदकेच्छानिष्ठज्ञानजन्यतावच्छेदककृतिनिष्ठेच्छाजन्यतावच्छेदकेषु जन्यत्वप्रवेशगौरवस्याधिकत्वात्। तस्मान्नानुमानादीश्वरसिद्धिः। अतः शास्त्रादेव सर्वोपादानभूतसर्वज्ञेश्वरसिद्धिः। तथा सूत्रितं च, "शास्त्रयोनित्वादि"ति॥

तस्मात् "यतो वा इमानि भूतानि जायन्ते, येन जातानि जीवन्ति, यत्प्रयन्त्यभिसंविशन्ति, तद्विजिज्ञासस्व, तद्ब्रह्म।" "सत्यं ज्ञानमनन्तं ब्रह्म।"

"क्लेशकर्मविपाकैस्तु वासनाभिस्तथैव च।
अपरामृष्ट एवेह पुरुषो हीश्वरः स्मृतः॥"

"उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः ।
यो लोकत्रयमाविश्य बिभर्त्यव्यय ईश्वरः ॥"
"तेजोबलैश्वर्यमहावबोधसुवीर्यशक्त्यादिगुणैकराशिः ।
परः पराणां सकला न यत्र क्लेशादयस्सन्ति परावरेशे ॥"

इत्यादिश्रुतिस्मृतिपुराणादिभिरेव परं ब्रह्मावगन्तव्यम् । न तु गुणदूषितपुरुषबुध्द्युत्प्रेक्षितयुक्तिकलापात्, सम्भाव्यमानान्यथासिद्धेः । तदुक्तम् ।

"वेदार्थो यः स्वयंज्ञानस्तत्र ज्ञानं भवेदपि ।
ऋषिभिर्निश्चिते तस्मिन्का शङ्का स्यान्महात्मनाम् ॥" इति।

तच्च शास्त्रैकप्रमाणकं परं ब्रह्म श्रियः पतिः श्रीमन्नारायण एव, लक्ष्यभूतब्रह्मस्वरूपशोधके "सत्यं ज्ञानमनन्तं ब्रह्मे"ति वाक्ये नारायणरूढानन्तशब्देन ब्रह्मणो नारायणत्वप्रतीतेः । कारणत्वेन लक्षितस्य 'सदेवे'त्यादिछान्दोग्यवाक्येन सद्रूपतयावधारितस्य "ब्रह्मवे"त्यादिवाजसनेयवाक्येन ब्रह्मतयावधारितस्य 'आत्मा वा इदमि'त्यादितैत्तिरीयवाक्येन चेतनरूपतयावधारितस्य "एको ह वै नारायण आसीदि"ति महोपनिषद्वाक्येन नारायणरूपत्वावधारणात् ।

"आभूतसंप्लवे प्राप्ते प्रणष्टे प्रकृतौ महान् ।
एकस्तिष्ठति भूतात्मा सक्नारायणः प्रभुः ॥
राजाधिराजस्सर्वेषां विष्णुर्ब्रह्ममयो महान् ।
ईश्वरं तं विजानीमः स प्रभुः स प्रजापतिः ।
ईश्वरो भगवान्विष्णुः परमात्माहमर्जुन ।
शास्ता चराचरस्यैको यतीनां परमा गतिः"

इत्यादिवचनाच्च न ब्रह्मा न शङ्करो नेन्द्रादिः कारणलक्षणलक्षितं ब्रह्म, "न ब्रह्मा नेशानो नेमे द्यावापृथिवी न नक्षत्राणि ।"

"पुराथ प्रलये प्राप्ते नष्टे स्थावरजङ्गमे ।
ब्रह्मादिषु प्रलीनेषु नष्टे लोके चराचरे ॥"

इत्यादिश्रुतिस्मृतिषु तेषां कारणत्वनिषेधात् ।

किं च 'पुरुषो ह वै नारायणोऽकामयत प्रजास्सृजेये" त्यारभ्याम्नाते "नारायणाद्ब्रह्मा जायते । नारायणाद्रुद्रो जायते । नारायणात्प्रजापतिर्जायते । नारायणादिन्द्रो जायते । नारायणाद्द्वादशादित्या रुद्रा वसवः प्रजापतयश्च सर्वे देवाः समुत्पद्यन्ते सर्वे लोकाः सर्वाणि च भूतानि । नारायणादेव समुत्पद्यन्ते नारायणे प्रलीयन्ते" इत्यादौ कण्ठरवेण नारायणस्य सर्वजगत्कारणत्वं ब्रह्मादीनां च तज्जन्यत्वं प्रतिपादितम् । अतो नारायण एव जगत्कारणत्वलक्षणलक्षितं ब्रह्म ।

न च "यदा तमस्तन्न दिवा न रात्रिः न सन्न चासच्छिव एव केवलः । तदक्षरं तत्सवितुर्वरेण्यं प्रज्ञा च तस्मात्प्रसृता पुराणी" इति श्वेताश्वतरवाक्योक्तशिव एव कारणवाक्यानां पर्यवसानमस्तु, "एको ह वै नारायण आसीदि"ति वाक्यमपि परमशिवान्नारायण आसीदुत्पन्न इत्यर्थकं न विरुध्यत इति वाच्यम्,—"शाश्वतं शिवमच्युतमि"त्यादिषु नारायणेऽपि शिवशब्द प्रयोगदर्शनेन मङ्गलादावपि दृष्टप्रयोगस्य साधारणस्य शिवशब्दस्य देवताविशेषनिर्णायकत्वाभावेन च श्वेताश्वतरस्य नारायणविषयत्वे नाप्युपपत्तेः । "आसीदि"ति पदं नोत्पत्त्यर्थकम्, 'न ब्रह्मा नेशान' इति निषेधानुपपत्तेः; प्रथममिति पदकण्ठनेन निषेधसमर्थने तस्यैव दोषत्वात्, हेतुवाचिपञ्चम्यन्तपदाऽध्याहारापत्तेः, "एकस्तिष्ठती"ति स्थित्यर्थत्वग्राहकोपबृंहणविरोधापत्तेः, "सदेव सोम्येदमग्र आसीत्" इत्यादिवाक्यवैरूप्यापत्तेश्च । न च नारायणशब्दः श्रुतिषु नारायणे शिवशब्दवच्छिवे प्रयुक्तो दृष्टः ?

न च "नाराणामयनं यस्मादि"ति पुराणे शिवे नारायणनामनिर्वचनात् नारायणशब्दः शिवविषयतयान्यथासिद्ध इति वाच्यम्,— "न तु नारायणादीनां नाम्नामन्यत्र सम्भवः। अन्यनाम्नां गतिर्विष्णुरेक एव प्रकीर्तित" इत्यादिवचनेन नारायणादिशब्दानां अन्यत्र शक्त्या सम्भवाभावस्य शिवादिशब्दानां नारायणे मुख्यतायाश्च स्फुटं प्रतीतेः। तस्मादुपनिषत्सु कारणविषये प्रयुक्तानां देवतान्तरवाचिनां शब्दानां निरुक्तवचनेन विष्णावन्यथासिद्धतयाऽनन्यथासिद्धनारायणपदघटितकारणवाक्यानुसारेण सर्वा अप्युपनिषदो नारायणकारणत्वपरा इति सिद्धम्।

किं च "आब्रह्मस्तम्बपर्यन्ता जगदन्तर्व्यवस्थिताः।
प्राणिनः कर्मजनितसंसारवशवर्तिनः॥
अहो बत महद्दुःखं वेदनाशनजन्म च।
प्राप्तं दुनोति हृदयं मादिशोकाप्यरुन्धयन्॥
यस्मादनपराधस्य शिरश्छिन्नं त्वया मम।
तस्माच्छापसमायुक्तः कपालीत्वं भविष्यसि॥
ब्रह्महाकुलितो भूत्वा चरंस्तीर्थानि भूतले।
ततोऽहं गतवान्देवि हिमवन्तं शिलोच्चयम्॥"

इत्यादिशौनकनारायणीयादिवचनैः कर्मवश्यतयावगता ब्रह्मरुद्रादयः,

"ब्रह्माद्याः सकला देवा मनुष्याः पशवस्तथा।
विष्णुमायामहावर्तगाढान्धतमसावृताः॥"

इत्यादिवचनात्प्रकृतिवश्यतयावगताः,

"प्रजापतिं च रुद्रं चाप्यहमेव सृजामि वै।
तौ तु मां न विजानीतो मम मायाविमोहितौ॥

न च "नाराणामयनं यस्मादि"ति पुराणे शिवे नारायणनामनिर्वचनात् नारायणशब्दः शिवविषयतयान्यथासिद्ध इति वाच्यम्,— "न तु नारायणादीनां नाम्नामन्यत्र सम्भवः । अन्यनाम्नां गतिर्विष्णुरेक एव प्रकीर्तित" इत्यादिवचनेन नारायणादिशब्दानां अन्यत्र शक्त्या सम्भवाभावस्य शिवादिशब्दानां नारायणे मुख्यतायाश्च स्फुटं प्रतीतेः । तस्मादुपनिषत्सु कारणविषये प्रयुक्तानां देवतान्तरवाचिनां शब्दानां निरुक्तवचनेन विष्णावन्यथासिद्धतयाऽनन्यथासिद्धनारायणपदघटितकारणवाक्यानुसारेण सर्वा अप्युपनिषदो नारायणकारणत्वपरा इति सिद्धम् ।

किं च "आब्रह्मस्तम्बपर्यन्ता जगदन्तर्व्यवस्थिताः ।
प्राणिनः कर्मजनितसंसारवशवर्तिनः ॥
अहो बत महद्दुःखं वेदनाशनजन्म च ।
प्राप्तं दुनोति हृदयं मादिशोकाप्यरुन्धयन् ॥
यस्मादनपराधस्य शिरश्छिन्नं त्वया मम ।
तस्माच्छापसमायुक्तः कपालीत्वं भविष्यसि ॥
ब्रह्महाकुलितो भूत्वा चरंस्तीर्थानि भूतले ।
ततोऽहं गतवान्देवि हिमवन्तं शिलोच्चयम् ॥"

इत्यादिशौनकनारायणीयादिवचनैः कर्मवश्यतयावगता ब्रह्मरुद्रादयः,

"ब्रह्माद्याः सकला देवा मनुष्याः पशवस्तथा ।
विष्णुमायामहावर्तगाढान्धतमसावृताः ॥"

इत्यादिवचनात्प्रकृतिवश्यतयावगताः,

"प्रजापतिं च रुद्रं चाप्यहमेव सृजामि वै ।
तौ तु मां न विजानीतो मम मायाविमोहितौ ॥

त्युक्तलोहितरूपाश्रयात्तेजसो व्यावृत्तिः । अस्नेहमिति स्नेहगुणाश्रयाज्जलाद्व्यावृत्तिः। तमश्शब्दो नीलरूपपरः, छायातमसोः पृथिवीधर्मत्वादच्छायमतम इति पदाभ्यां पृथिव्या व्यावृत्तिः । अवाय्वाकाशमिति वाय्वाकाशाभ्यां व्यावृत्तिः । असङ्गमरसमगन्धमिति विषयपञ्चकव्यावृत्तिः । रूपशब्दयोरुपलक्षणमेतत् । अचक्षुष्कमश्रोत्रमवाङ्मनस्कमितीन्द्रियान्तरस्याप्युपलक्षकम्, तेन ज्ञानेन्द्रियाद्व्यावृत्तिः। अवागिति सर्वकर्मेन्द्रियोपलक्षकम्, तेन कर्मेन्द्रियाद्व्यावृत्तिः । अतेजस्कमित्यहङ्काराद्व्यावृत्तिः, तेजोविशेषत्वादहङ्कारस्य । स्वार्थे कित्रप्रत्ययः । अप्राणमिति प्राणाद्व्यावृत्तिः । असुखमिति शरीराद्व्यावृत्तिः । अमात्रमिति तन्मात्रेभ्यः । अनन्तरमबाह्यमिति-सावयवात् । न तदश्नातीति जीवात्, जीवस्य "पिप्पलं स्वाद्वत्ती"ति कर्मफलभोक्तृत्वश्रवणात् । जीवव्यावृत्तिकथनेनैव तद्भोग्यभूतप्रधानात् कालाच्च व्यावृत्तिः सिद्धा "प्रधानपुरुषव्यक्तकालानां परमं हि तदि"ति जीवेन सह प्रधानपुरुषाभ्यां व्यावृत्तेरुक्तत्वात् । तथा च चतुर्विंशतितत्त्वात्मिकायाः प्रकृतेः पञ्चविंशात्मकाच्च पुरुषात् विलक्षणमिदं वस्तु षड्विंशत्वेन वा कालापेक्षया सप्तविंशत्वेन वा निर्दिशति—"तं षड्विंशकमित्याहुः सप्तविंशमथापरे ।" इति । एवमेव शोधितं तैत्तिरीयश्रुत्यन्तरेण "सत्यं ज्ञानमनन्तं ब्रह्मे"ति । निरुपाधिकसत्यत्वविशिष्टवाचिना सत्यशब्देन विकारास्पदाचेतनतत्संसृष्टचेतनाभ्यां व्यावृत्तिः । नित्यासङ्कुचितज्ञानवाचिना ज्ञानपदेन कदाचित्संकुचितज्ञानान्मुक्ताद्व्यावृत्तिः । देशकालवस्तुपरिच्छेदरहितवाचिना सगुणस्वरूपस्य गुणतः स्वरूपतश्चानन्त्यमुपस्थापयतानन्तपदेन सातिशयस्वरूपगुणान्नित्या व्यावृत्ताः । अत्र समानाधिकरणानि सत्यादिपदानि स्वस्वप्रवृत्तिनिमित्तं सत्यत्वादिविशिष्टब्रह्मरूपैकधर्म्युपस्थापकानि, भिन्नधर्मोपस्थापकत्वे सत्येकधर्म्युपस्थापकत्वं हि सामानाधिकरण्यम् । घटः कलश इत्यादिपर्यायशब्दवारणाय भिन्न

धर्मोपस्थापकत्वे सतीति; गौरश्व इत्यादिवारणाय एकधर्म्युपस्थापकत्वे सतीति, देवदत्तः श्यामः नीलो घटः इति समानाधिकरणदेवदत्तश्यामादिशब्दाभ्यां देवदत्तत्वश्यामत्वादिरूपधर्मविशिष्टदेवदत्तादिरूपैकधर्म्युपस्थापकत्वाल्लक्षणसङ्गतिः । न च विशेषणभेदेन विशिष्टभेदादेकार्थत्वभङ्गः शङ्कनीयः, प्रमाणान्तरेण विरुद्धतयावगतानामेव भेदकतया सत्यत्वादीनामतथाभूतानां भेदकत्वाभावात् । न च सत्यत्वतदाश्रययोः सत्यशब्दार्थत्वे समानविभक्त्यवगतैकत्वान्वयविरोधः, विभक्त्यर्थस्य प्रातिपदिकार्थभूतविशेष्यभागित्वात्, अन्यथा विभक्त्यर्थकर्मत्वादेरपि विशेषणानन्वयिनः प्रातिपदिकार्थानन्वयप्रसङ्गात् । न च सत्यत्वविशिष्टे ज्ञानत्वरूपविशेषणान्तरवैशिष्ट्यबोधने विशेषणानामन्योन्यसमवायप्रसङ्गः; एकविशेषणविशिष्टतयावगतस्य विशेषणान्तरवैशिष्ट्यबोधानभ्युपगमात्, युगपदेव हि सर्वविशेषणान्वितविशेष्यं समानाधिकरणपदैर्बोध्यते । यौगपद्येऽपि ज्ञातत्वाज्ञातत्वनिबन्धनोद्देश्योपादेयभावश्चोपपद्यते ।

केचित्तु पीतिमव्यावृत्तं शुक्लं शुक्लव्यावृत्तं कृष्णं रूपमितिवदनृतजडपरिच्छिन्नव्यावृत्तं ब्रह्म बोधयन्ति । सत्यादिपदानि, व्यावृत्तिश्च न धर्मः, अपि तु स्वरूपमेव, शौक्ल्यादिव्यावृत्तिवत्, जगति प्रतियोगिनिषयव्यावृत्तिबोधजनकानां न पर्यायता, नापि वैयर्थ्यं च, तस्मादखण्डार्थबोधकं सत्यादिवाक्यमित्याहुः । तन्न; शक्यतावच्छेदकान्यानृतादिप्रतियोगिप्रकारकबोधजनकतया सत्यादिपदानां लक्षणापत्तेः । न च मुख्यार्थसम्भवे सा युक्ता न च विकारास्पदजडपरिच्छिन्नजगत्कारणतया कारणवाक्यावगतस्य ब्रह्मणः स्वरूपावधारणाय प्रवृत्तस्य सत्यादिवाक्यस्यानृतादिव्यावृत्तितात्पर्यावधारणात् यष्टीरित्यादिवल्लक्षणा न दोषायेति शङ्कनीयम्, कारणत्वलक्षणलक्ष्य-

स्वरूपबोधकवाक्यस्य प्रथममेव प्रवृत्तेः, सत्यत्वादिबोधनमुखेन-निरुक्तव्यावृत्तिफलकत्वसिद्धेश्च ।

किं च — सत्यादिपदमनृतादिव्यावृत्त्युपलक्षितं बोधयति, तद्विशिष्टं वा? आद्ये, उपलक्ष्यतावच्छेदकाभावेनोपलक्षकत्वमनुपपन्नम्, तदभ्युपगमे सविशेषत्वम् । अन्त्ये विशेष्यप्रतीत्युपायभूतविशेष्यवृत्तिधर्मस्यैव विशेषणतयाऽखण्डार्थत्वहानिः । विशेषणभेदेनार्थभेदश्च । विस्तरस्तु श्रुतप्रकाशिकादौ द्रष्टव्यः । तस्माच्छास्त्रसमधिगम्यं नारायणाख्यं परं ब्रह्म पञ्चविंशतितत्त्वात्मकप्रकृतेः पुरुषाच्च विलक्षणस्वरूपमिति सिद्धम् ।

एवं सत्यत्वादिगुणविशिष्टतयावगतस्सर्वेश्वरः सर्वात्मकः, "पुरुष एवेदं सर्वम्" "सर्वं खल्विदं ब्रह्म" "आत्मैवेदं सर्व-मि"ति श्रुतेः । न च समस्तवस्तुविलक्षणस्य सर्वात्मकत्वमनुपपन्नमिति वाच्यम्, जीवस्य देवादिशरीरानुप्रवेशेन देवो मनुष्य इतिवत् सर्ववस्त्वनुप्रवेशेन सर्वमिति सर्वात्मकत्वव्यपदेशोपपत्तेः । सर्ववस्त्वनुप्रवेशेन सर्वात्मत्वं "तदनुप्रविश्य सच्च त्यच्चाभवदि"त्यादिश्रुतिसिद्धम् । "ऐतदात्म्यमिदं सर्वं स आत्मा" "यस्यात्मा शरीरं यस्य पृथिवी शरीरं, यस्यापः शरीरम् ।" "तत्सर्वं वै हरेस्तनुः" "तानि सर्वाणि तद्वपुरि"त्यादिश्रुतिस्मृतिभ्यां कृत्स्नस्य प्रपञ्चस्य भगवच्छरीरत्वं चावगतम् । न च चेष्टेन्द्रियाश्रयत्वरूपशरीरलक्षणाभावात् न जगद्ब्रह्मशरीरमिति वाच्यम्,—यस्य चेतनस्य यद्द्रव्यं सर्वात्मना स्वार्थे नियन्तुं शक्यं तत्तस्य शरीरमिति शरीरलक्षणनिर्वचनेन जगतः शरीरत्वोपपत्तेः । अन्यथा चेष्टाश्रयत्वेन्द्रियाश्रयत्वादिरूपशरीरलक्षणपरिग्रहे जगद्ब्रह्मणोः शरीरशरीरिभावाभिधायिनां बहूनां शब्दानां लक्षणापत्तेः । तस्माद्यथा "तन्मे प्रमाणं शिवः" इति पौरुषेयवाक्यगतप्रमाणव्यपदेशमुख्यत्वाय तत्साधारणप्रमाण

लक्षणमन्यत् निरुच्य प्रमाकरणत्वरूपप्रमाणलक्षणं लौकिक प्रमाणस्येत्युच्यते तथाऽपौरुषेयवेदगतशब्दप्रमुखपरत्वाय उक्त शरीरसामान्यलक्षणमङ्गीकृत्य चेष्टेन्द्रियाश्रयत्वादिकं शरीर विशेषस्य लक्षणमित्यङ्गीकार्यम् । अतो जगद्ब्रह्मशरीरमेव । लक्षणे यस्येति षष्ठ्यन्तेन पुत्रत्वादिवत् सप्रतियोगिकमिति सूचितम् । तत्र “ तस्माद्वा एतस्मादात्मन आकाशस्सम्भूतः ” इत्यत्र केवलात्मशब्दप्रयोगेऽपि तद्व्यतिरिक्तवस्तुनस्तच्छरीरत्वं विवक्षितमिति ज्ञापनाय । धर्मभूतज्ञानेऽतिव्याप्तिवारणाय चेत-नस्येति पदम् । चैतन्यविशिष्टस्येत्यर्थः । जीवगतक्रियादीनां शरीरत्वाभावाद्द्रव्यमिति । शरीरस्य स्वाविषयकार्यं प्रति नियमनायोगादसम्भवस्स्यादिति तद्वारणाय स्वार्थ इति । शरीरधारणसाध्य-कार्य इत्यर्थः । स्वार्थे योग्यमित्युक्ते शरीरधारणसाध्यकार्ये भगवतोऽपि योग्यत्वादतिव्याप्तिवारणाय नियन्तुमिति पदम् । आमवातजडीकृतशरीराव्याप्तिवारणाय शक्यमिति पदम् । नियमनाभावेऽपि तच्छक्तिविषयत्वमस्त्येवेति न दोषः । हस्ताद्यवयवानामेव समुदितानां शरीरत्वात् न तेष्वतिव्याप्तिः । एवमिन्द्रियादिष्वपि द्रष्टव्यम् । तस्माद्भगवतः सर्वशरीरकत्वात्सर्वत्वं देवमनुष्यादिशरीरके देवत्वमनुष्यत्ववदुपपन्नम् । स्पष्टमेवेदं “ सर्वं समाप्नोषि ततोऽसि सर्वः ” “ सर्वगत्वादनन्तस्य सर्व इत्यभिधीयते ” इत्यादिप्रतिपन्नम् । न तु “ सर्वं खल्विदं ब्रह्म ” आत्मैवेदं सर्वमिति ” इत्यादेः स्वरूपैक्यं प्रतिपाद्यते , चेतनाचेतनयोः किञ्चिज्ज्ञत्वसर्वज्ञत्वरूपविरुद्धधर्माश्रययोरैक्यायोगात् ; “ क्षरं प्रधानममृताक्षरं हरः । क्षरात्मानावीशते देव एकः ” “ ज्ञाज्ञौ द्वावजावीशनीशौ ” “ पृथगात्मानं प्रेरितारं च मत्वा ” “ नित्यो नित्यानां चेतनश्चेतनानामेको बहूनां यो विदधाति कामान् ” “ यस्मात् क्षरमतीतोऽहमक्षरादपि चोत्तमः । अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तमः ” । “ क्षरः सर्वाणि भूतानि

कूटस्थोऽक्षर उच्यते । उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः। यो लोकत्रयमाविश्य बिभर्त्यव्यय ईश्वर " इत्यादि श्रुतिस्मृतिभिर्भेदावगमात् । न च भेदोऽपरमार्थ इति वक्तुं शक्यम्, " जुष्टं यदा पश्यत्यन्यमीशम् " " पृथगात्मानं प्रेरितारं च मत्वे " त्यादिषु मोक्षजनकज्ञानविषयत्वप्रतीतेः । ' नित्यो नित्यानामि " ति वाक्ये बहुवचनादेव बहुत्वावगतौ बहूनामिति पदस्य वैयर्थ्यपरिहाराय पारमार्थिकबहुत्वावश्यम्भावेन भेदस्य पारमार्थिकत्वसिद्धेः । ' विभेदजनके ज्ञाने नाशमात्यन्तिकं गते । आत्मनो ब्रह्मणो भेदमसन्तं कः करिष्यती " त्यत्र जीवनिष्ठब्रह्मप्रतियोगिकभेदेऽसत्त्वविशेषणेन परमार्थभेदसिद्धेश्च । " सर्वं खल्वि " त्यादौ सामानाधिकरण्यं चोर एष स्थाणुरित्यत्रेव बाधार्थमित्यपि न युक्तम्, विरोधित्वेन निश्चिताकारश्रवण एव सामानाधिकरण्यस्य बाधार्थत्वेऽप्यन्यत्र तदसम्भवात् "भिन्नप्रवृत्तिनिमित्तानामि" ति सामानाधिकरण्यलक्षणस्योक्तत्वेन बाधार्थसमानाधिकरण्यस्यैवासिद्धेश्च । तस्मात्प्रपञ्चः सत्य एव ।

एतेन प्रपञ्चो मिथ्या दृश्यत्वाच्छुक्तिरूप्यवत्-इत्याद्यनुमानं निरस्तम्, बाधात् । किञ्चात्र पक्षत्वेनाभिमतः प्रपञ्च आत्मान्यः, किं वा जडः, उतानिर्वचनीयः? आद्ये दृश्यत्वं प्रति आत्मन्यनैकान्त्यम् । आत्मा न दृश्य आत्मत्वादित्यनुमानाद्धेत्वभावासिद्धिरिति न वाच्यम्, अदृश्ये गगनिपाणे दृश्ये घटादौ चात्मत्वाभावेनात्मत्वहेतोरसाधारण्यात् । आत्ममात्रस्य पक्षतया प्रमाणान्तरदृश्यपरात्मनि पक्षैकदेशे बाधात् । न च दृ[illegible] न

व्यभिचार इति युक्तम्, [illegible]

तज्जातीयव्यक्त्यन्तरकर्मत्वविरोधाभावेनात्मनो दृश्यत्वसम्भवात् । अन्यथा वृन्तच्छेदनकर्तुस्तज्जातीयच्छेदनान्तरकर्मत्वानापत्तेः। ज्ञानव्यक्तिभेदानभ्युपगमे प्रमाणभेदव्यवहारानापत्तेः । साक्षिदृश्यत्वस्य हेतुत्वे विशेषणासिद्धेः ।

द्वितीये जडत्वं संविदन्यत्वम्, तथा च दृश्यत्वहेतोः पक्षभिन्नायां संविद्यनैकान्त्यम्। न च संविद अनुभाव्यत्वेऽननुभूतित्वप्रसङ्गः, अननुभाव्यत्वेऽपि शशविषाणवदननुभूतित्वप्रसङ्गसाम्यात्। तत्रासत्त्वप्रयुक्तमननुभाव्यत्वं न त्वननुभूतित्वप्रयुक्तमिति चेत्? घटादेरज्ञानानिरोधित्वप्रयुक्तमननुभूतित्वं न त्वनुभाव्यत्वप्रयुक्तमित्यपि पश्यतु भवान्। संविन्मात्रस्य पक्षत्वेन प्रमाणान्तरानुभाव्यपरात्मसंविदि पक्षैकदेशभूतायामननुभाव्यत्वाभावात्, तत्रैव व्यभिचारेणानुभाव्यत्वाननुभूतित्वयोर्व्याप्तिबाधाच्च। अनिर्वचनीयः प्रपञ्चशब्दार्थ इति तृतीयपक्षे आश्रयासिद्धिः, "आत्मा वा अरे द्रष्टव्यः" "दृश्यते त्वग्र्यया बुद्ध्ये" त्यादिभिरात्मनो दृश्यत्वविधानादनैकान्त्यं च। "परिपश्यन्ति धीरा" इति श्रवणात्। "न मांमचक्षुरभिवीक्षते तमि" ति विशेषनिषेधात् तत्परो दृश्यत्वनिषेधः। आत्मा न दृश्यः आत्मत्वादित्यनुमानमग्नीषोमीयहिंसाया अधर्ममाधकत्वानुमानवदागमबाधितं च। साध्यं मिथ्यात्वं न प्रतिपन्नोपाधौ बाध्यत्वम्, बाधात्। न हि यत्काले यद्देशे घटादयः प्रतिपन्नास्तत्काले तद्देशे घटो नास्तीति बाधो दृश्यते? न च भगवति प्रतिपन्नानामेव "न च मत्स्थानि भूतानी" ति निषेधदर्शनात् बाध्यत्वमिति युक्तम्, लोकरीत्या तदाधारत्वनिषेधपरत्वात्; अन्यथा "मत्स्थानीत्युपधारये" त्याधारत्वोक्तिविरोधापत्तेः। नाप्यनिर्वचनीयत्वम्, पक्षे बाधात्, दृष्टान्ते साध्यवैकल्याच्च। प्रतीतिबाधाभ्यां हि अनिर्वचनीयत्वं तत्राभिमतम्, तत्प्रपञ्चे नास्त्येव, बाधाभावात्। अन्यत्रैव सतो रजतरजतत्वादेः शुक्तौ प्रतीतिबाधोपपत्त्याऽनिर्वचनीयरजतासिद्धेः। नाप्यनिर्वचनीयरजतोत्पत्तौ कारणमस्ति। न तावत्प्रतीतिः, विषयं विनाप्युपपत्तेस्सम्भवात्। नापीन्द्रियम्, तस्य विषयगतधर्मोत्पादकत्वदर्शनासिद्धेः। अतएव नेन्द्रियदोषः, तस्य रजतोत्प-

त्विहेतुत्वे मानाभावात् । तस्माद्दृष्टान्तः साध्यविकलः । किञ्च प्रपञ्चो मिथ्येति साध्यभूतं मिथ्यात्वं यदि सत्यं तदा तत्रैव व्यभिचारो दृश्यत्वहेतोः, अद्वैतहानिश्च । यदि मिथ्या, तदा प्रपञ्चमिथ्यात्वासिद्धिः, मिथ्यात्वस्य बाधितत्वात् । न च सत्यत्वस्य सत्यत्वे सत्यत्वबाधः, प्रत्युत सत्यत्वस्य सत्यत्वेऽवाध्यत्व प्राप्त्या तत्स्थापनमेव भवति ।

यत्तु प्रपञ्चो नाम भेदः, स च प्रमाणतः स्वरूपतश्च दुर्निरूपः ; भेदग्राहकत्वेनाभिमतं घटपटादिप्रत्यक्षं किं स्वरूपमात्रग्राहि, उत भेदग्राहि, उतोभयग्राहि ? आद्ये भेदग्राहकत्वं न स्यात्, द्वितीये असिद्धिः — स्वरूपग्रहणसापेक्षत्वात् भेदग्रहणस्य ; अन्त्ये उभयग्रहणं किं युगपत्, उत क्रमेण ? नाद्यः, स्वरूपग्रहणसाध्य भेदग्रहस्य स्वरूपग्रहणस्य चैकदोत्पत्त्यसम्भवात् ; नद्वितीयः, क्षणिकस्य ज्ञानस्य भेदग्रहणपर्यन्तस्थित्ययोगात् ; अत एव न प्रमाणान्तरेण भेदग्रहणमिति प्रमाणतो दुर्निरूपत्वम् ; भेदः किं स्वरूपं धर्मो वा ? आद्ये घटो भेद इति शब्दयोः पर्यायत्वप्रसङ्गः, स्वरूपे स्वरूपान्तत्वेन भिन्नो घट इति व्यवहारानुपपत्तिः ; द्वितीये किं स धर्मस्स्वरूपाद्भिन्न उताभिन्नः ? आद्ये तस्यापि भेद स्तद्धर्मस्तस्यापि स इत्यनवस्था, अन्त्ये स्वरूपपक्षोक्ता दोषा इति भेदः स्वरूपतो दुर्निरूपः ; अतो भेदरूपप्रपञ्चस्य न परमार्थत्वमिति । तन्न, भेदापलापेन भेदप्रत्यक्षनिराकरणे स्वपक्षपर पक्षसाधनदूषणादिभेदव्यवहारोच्छेदापत्तेः ; प्रत्यक्षाभ्युपगमे करण निरासोऽनुपपन्नः, प्रत्यक्षरूपकार्येणैव तस्य कल्पनीयत्वात् ; भेदाप लापेन प्रतीतेर्निर्विषयत्वे बाध्यविषयत्वे वा स्वीक्रियमाणे स्वपक्ष परपक्षसाधनदूषणप्रतीतेरपि निर्विषयत्वबाध्यविषयत्वयोगापत्त्या भेद प्रत्यक्षानुपपत्तिः ; भेदनिरासकतर्केण स्व [illegible] प्रमाणस्य, तुच्छप्रमाणयोरपि बाधापत्त्या उपजीव्यबाधः प्रयोजनासिद्धिश्च । तस्य भेदोऽवश्याभ्युपगन्तव्य एव ।

न च प्रमाणतः स्वरूपतश्च भेदो दुर्निरूप इति वाच्यम्,— घटस्वरूपस्य घटत्वादिरूपधर्मस्य च भेदत्वेन भिन्न इति शब्दरूप व्यवहार एव प्रतियोगिज्ञानापेक्षत्वाभ्युपगमेन च प्रतियोगिज्ञानं विनैव प्रथममेव प्रत्यक्षेण युगपदेव स्वरूपभेदयोर्ग्रहणाङ्गीकारात्। स्वरूपरूपत्वे पर्यायत्वप्रसङ्गस्तु संविद इव स्वपरनिर्वाहकत्वाभ्युपगमात्परिहृतः। तस्माद्भेदस्य प्रमाणतः स्वरूपतश्च दुर्निरूपत्वाभावात् भेदः परमार्थ एव।

यच्च "नेह नानास्ति किञ्चने" ति प्रपञ्चनिषेधात्प्रपञ्चो मिथ्येति। तन्न, "यस्मिन्पञ्च पञ्च जना" इति वाक्ये ब्रह्माश्रयत्वेनोक्तानां स्वरूपेण निषेधासम्भवेन तद्वाक्यस्य ब्रह्माश्रयत्वप्रकारात् नाना-भिन्नप्रकारं वस्तु इह प्रपञ्चे नास्ति इत्येतदर्थपरताया एव वाच्यत्वात्। "एकमेवाद्वितीयमि"त्यपि न प्रपञ्चनिषेधपरम्, समाभ्यधिकनिषेधपरत्वात्। "न तत्सम श्चाभ्यधिकश्च दृश्यते" इति वाक्यान्तरे तयोर्निषेधदर्शनात्। लोके चोळनृपोऽद्वितीय एक एव सविता न द्वितीय इत्युक्त्या समाभ्यधिकराहित्यप्रतीतेः। कळत्रपुत्रभटानां रश्मीनां वा व्यावृत्त्यप्रतीतेश्च। न च "सत्यं ज्ञानमनन्तं ब्रह्मे" ति अनन्तत्वं प्रतिपादितम्, तच्च देशतः कालतो वस्तुतः परिच्छेदराहित्यम्, वस्त्वपरिच्छेदो वस्त्वन्तराभाव एव, तथा च प्रपञ्चाभावस्सिद्ध इति वाच्यम्;— इदमिह न भवतीति देशपरिच्छेदवदिदमिदानीं नेति कालपरिच्छेदवदिदमिदं न भवतीति वस्त्वन्तरात्मतया निषेधस्यैव वस्तुपरिच्छेदरूपतया सर्वात्मके च ब्रह्मणि तदसम्भवेनानन्त्यसिद्ध्या प्रपञ्चाभावासिद्धेः। "यच्च किञ्चिज्जगत्यस्मिन् दृश्यते श्रूयतेऽपि वा। अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणः स्थित" इति सर्ववस्तुव्याप्तिकृतसर्वात्मकत्वमेव सर्ववस्त्वपरिच्छेदरूपमानन्त्यमिति स्फुटं प्रतीत्या वस्त्वपरिच्छेद इति त्वयोक्तापरिच्छेदस्य श्रुतिविरुद्धत्वाच्च।

यदि प्रपञ्चो मिथ्या तर्हि दोषो वाच्यः, स च नास्त्येव, न हि सर्वप्रपञ्चभ्रमहेतुभूतो दोषः कश्चित्प्रत्यक्षेण ज्ञायते। न च "अहमज्ञो मामन्यं च न जानामी" ति प्रत्यक्षेण ज्ञायत इति युक्तम्, तस्य ज्ञानाभावविषयत्वेनैवोपपत्तेः। न च प्रतियोगिभूतज्ञानस्य ज्ञाने ज्ञानाभावप्रतीत्यनुपपत्तिः, ज्ञानाभावे प्रतियोगिज्ञानाभावादभावप्रतीत्यनुपपत्तिरिति वाच्यम्,— अज्ञानस्य ज्ञानविरोधित्वेनैव प्रतीत्या प्रतियोगिज्ञानतदभावयोर्विरोधस्य स्वपक्षेऽपि सत्त्वात्। नाप्यनुमानात्तत्सिद्धिः। न च वाच्यं विवादाध्यासितं प्रमाणज्ञानं स्वप्रागभावातिरिक्तस्वविषयावरणस्वनिवर्त्यस्वदेशगतवस्त्वन्तरपूर्वकम्—अप्रकाशितार्थप्रकाशकत्वात्, अन्धकारे प्रथमोत्पन्नप्रदीपप्रभावदित्यनुमानमज्ञानसाधकम्; द्वितीयज्ञाने व्यभिचारवारणायाप्रकाशितेति हेतुविशेषणम्; स्वविषयपूर्वकत्वे नार्थान्तरवारणाय स्वदेशगतेति, ज्ञानदेशभूतात्मवृत्तिमनस्संयोगपूर्वकत्वेनार्थान्तरवारणाय स्वनिवर्त्येति, रज्जुत्वज्ञाननिवर्त्यभयादिपूर्वकत्वेनार्थान्तरवारणाय स्वविषयावरणेति, प्रागभावव्यावृत्त्यर्थं प्रागभावातिरिक्तेति विशेषणमिति।—स्वप्रागभावातिरिक्तेति साध्यविशेषणवैयर्थ्यात् वस्तुपदेनैव भावलाभात्। अज्ञानानुमितौ प्रमाणभूतायां स्वविषयभूताज्ञानावारकाज्ञानपूर्वकत्वाभावेन व्यभिचारात्। अज्ञानावारकाज्ञानाभ्युपगमे अज्ञानस्य ज्ञानासम्भवेन सत्त्वस्यैव दोषत्वे तिमिरादिवत् ज्ञानानिवर्त्यत्वापत्त्याऽनिर्मोक्षप्रसङ्गाच्च। नापि श्रुतिरज्ञानसाधिका, अनिर्वचनीयाज्ञानसाधकश्रुतेरभावात्। "अनृतेन ही" त्यत्र नञ्समासान्तर्गतऋतपदस्य "यथावृक्षस्य सम्पुष्पितस्य दूराद्गन्धो वात्येवं पुण्यस्य कर्मण" इत्याद्यारभ्याम्नाते "एवमनृतादात्मानमि" ति वाक्य इव "ऋतं पिबन्तावि" ति वाक्य इव पुण्यकर्मवचनतयाऽनृतशब्देन पुण्येतरकर्मण एव प्रतिपादनात्। "नासदासीन्नो सदासीत्तदानीमि" ति वाक्ये चेतना

चेतनयोस्तमसि लयप्रतिपादके सदसच्छब्दयोरुत्पत्तिवाक्योपात्त चेतनाचेतनपरतयाऽनिर्वचनीयाज्ञानप्रतिपादकत्वासम्भवात्, काल विशेषेऽनिर्वचनीयत्वायोगाच्च। "मायां तु प्रकृतिमि" त्यत्रापि मायाशब्दो न मिथ्यावचनः, "तेन मायासहस्रं तच्छम्बरस्याशुगा मिने" त्यादौ सत्यभूतेऽस्त्रादौ मायाशब्दप्रयोगात्, किंत्वाश्चर्य करवचनस्सन् विचित्रनानाविधकार्यकरायां प्रकृतौ वर्तते। "इन्द्रो मायाभिरि" त्यत्र बहुवचनेन विचित्रशक्तिपर।

किंचाविद्यया ब्रह्मणस्तिरोधानमनुपपन्नम्। तिरोधानं हि प्रकाशाभावः। यथान्धकारेण घटस्य तिरोधानम्। तद्धि घट स्यान्धकाराधीनप्रकाशाभावरूपम्। न च ब्रह्मणोऽविद्याधीन प्रकाशाभावस्सम्भवति, नित्यस्वप्रकाशरूपत्वात् ब्रह्मणः। न चाज्ञानस्याश्रयः कश्चिदस्ति। न तावद्ब्रह्म तस्याश्रयः, स्वनिवर्तकब्रह्मज्ञानरूपत्वाद्ब्रह्मणः, न हि निवर्त्यं निवर्तकमाश्रयते। न च प्रमाणज्ञानं निवर्तकम् ब्रह्मतु न प्रमाणज्ञानमिति न निवर्तकमिति युक्तम्, प्रमाणज्ञानत्वस्यातिप्रसक्तत्वात्। प्रमाणजन्य ब्रह्मज्ञानत्वस्य गुरुतया लाघवेन ब्रह्मज्ञानत्वस्यैव निवर्तकतावच्छे दकत्वाच्च। न हि ब्रह्मज्ञानं प्रपञ्चसत्यत्वज्ञानरूपं ब्रह्मसत्यमिति ज्ञा नरूपं वा सम्भवति, येन प्रपञ्चे मिथ्यात्वज्ञानं ब्रह्मसत्यत्वज्ञानं वा निवर्तकं नतु ब्रह्मस्वरूपभूतज्ञानमिति शङ्क्येत। ब्रह्मसत्यत्वप्रपञ्च मिथ्यात्वयोर्ब्रह्मस्वरूपत्वे ब्रह्मस्वरूपज्ञानस्यापि सत्यत्वमिथ्यात्व ज्ञानरूपत्वाच्च। अतिरिक्तत्वे तयोः सत्यत्वेऽद्वैतहानिः, मिथ्यात्वे तज्ज्ञानस्य निवर्तकत्वानुपपत्तिः—अतत्त्वज्ञानवत्। न च स्वरूप मनवधारणम्, अतो न तज्ज्ञाननिवर्तकम्, अनभ्यासदशोत्पन्न जलज्ञानवदिति युक्तम्—ब्रह्मस्वरूपज्ञानस्यैकमात्रकोटिज्ञानात्मक त्वेन कदापि संशयरूपत्वाभावेन नानाकोटिकज्ञानस्वरूपस्य स्वर्म

भिमतसंशयाविरोधित्वरूपस्य चानवधारणत्वस्य वस्तुमात्रस्य स्वात् । जडस्यान्तःकरणवृत्तेर्ज्ञानत्वस्यैवाभावेनावधारणत्वस्य सुतरामनुपपत्ते. । विस्तरस्तु चण्डमारुते द्रष्टव्यः । नापि जीवाश्रय मज्ञानम् , जीवानामज्ञानकल्पितत्वेन तदाश्रयत्वानुपपत्तेः । तस्मात्प्रमाणानुपपत्तितिरोधानानुपपत्त्याश्रयानुपपत्तिभिः प्रपञ्चाध्यासहेतुदोषकल्पनायोगात् प्रपञ्चस्य मिथ्यात्वायोगात् प्रपञ्चः सत्य एव ।

एवम्भूतस्य प्रपञ्चस्य कारणं ब्रह्मेति " यतो वेत्या " दिवाक्यं बोधयति । तच्च कारणत्वं कर्तृत्वरूपमुपादानत्वरूपं च , कारणत्वबोधकपञ्चम्या असङ्कोचाय कर्तृत्वरूपनिमित्तत्वोपादानत्वोभयपरत्वावश्यम्भावात् । "तदैक्षतेति ' वाक्येन घटोऽग्र प्रागासीदिति निर्देशतुल्यनिर्देशवता " सदेव सोम्येदमग्र आसीदि " ति वाक्येन च ब्रह्मणो निमित्तोपादनत्वयो सिद्धेः । " तदात्मान स्वयमकुरुते " ति वाक्येन ब्रह्मणो निमित्तोपादानत्व सिद्धिः, अकुरुतेति कार्यानुकूलकृतिमत्त्वरूपकर्तृत्वस्यात्मानमिति उपादानत्वस्य चावगमात् । न च स्ववृत्तिभाव्यवस्थोपयोग्यवस्थावत्त्वमुपादानत्वम् , यथा मृदो घटावस्थोपयोगिपिण्डावस्थावत्त्वम् , न हि ब्रह्मणो भाव्यवस्थाप्रागवस्थाद्वयमस्ति , अतो ब्रह्म नोपादानमिति वाच्यम् ; आर्द्रत्वपिण्डत्वयोगमन्तरेण मृदो घटाद्यवस्थाया इव सूक्ष्मचिदचिद्योगमन्तरेण स्थूलचिदचिद्योगरूपबहुभवनावस्थाया अनुपपन्नत्वेन बहुभवनावस्थाहेतुसूक्ष्मचिदचिद्विशिष्टत्वावस्थामादाय ब्रह्मण उपादानत्वोपपत्तेः । न च "अविकारीयमात्मे ' त्यादिनिर्विकारत्वश्रुतिविरोध , तस्याः " तदात्मान स्वयमकुरुते " ति वाक्यविहितविकारेतरनिषेधपरतया विरोधाभावात् । अस्तु वा " बहुस्यामि " त्युक्त प्रपञ्चगतबहुत्वावस्थाश्रयत्वं परम्परया,

साक्षात्सम्बन्धनिषेधपरा च विकारनिषेधश्रुतिरिति न विरोधः, देवदत्तो जातो-जलं वहति-काठिन्यवान्यो बिभर्ति–नृसिंहो भगवांश्छेत इत्यादिषु परम्परयाप्याश्रयत्वव्यवहारदर्शनात्। न चैवं सति भूतलादेरपि घटाद्यनस्थाश्रयत्वापत्तिः, परम्परासम्बन्धसत्तामात्रेणाश्रयत्वानभ्युपगमात्; "बहुस्याम्" "इन्द्रो मायाभिः पुरुरूप ईयत" इत्यादि श्रुतिबोधिताधारत्वानुरोधेनैव परम्परासम्बन्धाश्रयणाच्च।

वस्तुतस्तु परिणम्यमानस्वरूपयोगित्वमुपादानत्वम्। यथा घटात्मना परिणम्यमानस्वरूपयोगिनी मृत्। योगित्वं च क्वचिद् भेदेन क्वचित् शरीरत्वेन, अतो ब्रह्मण उपादानत्वनिर्विकारत्वश्रुत्यविरोधः. स्थूलचेतनाचेतनविशिष्ट विशेषणीभूतचेतनाचेतने च प्रति ब्रह्मण उपादानत्वसिद्धिश्चेति दिक्।

एवमुपादानभूतं नारायणाख्यं परं ब्रह्मानन्तकल्याणगुणास्पदम्, " सत्यं ज्ञानमनन्तं ब्रह्म " " यस्सर्वज्ञः सर्ववित् " परास्य शक्तिर्विविधैव श्रूयते। " " आनन्दं ब्रह्मणो विद्वान् " " बृहन्तोह्यस्मिन् गुणाः " " सत्यकामः सत्यसङ्कल्पः " " अन्तः प्रविष्टः शास्ता " "ज्ञानशक्तिबलैश्वर्यवीर्यतेजांस्यशेषतः" "समस्तकल्याणगुणात्मकोऽसौ " " इच्छागृहीताभिमतोरुदेहः " इत्यादि श्रुतिस्मृतीतिहासपुराणादिषु तथावगमात्। त इमे गुणाः स्वाभाविकाः सत्याश्च, " स्वाभाविकी ज्ञानबलक्रिया च " "त इमे सत्याः कामाः " इत्यादिश्रुतेः। अपरिमिताश्च, " यतो वाचो निवर्तन्ते अप्राप्य मनसा सहे " ति श्रुतेः, " यथा रत्नानि जलधेरसंख्येयानि पुत्रक। तथा गुणा ह्यनन्तस्याप्यसंख्येया महात्मनः। चतुर्मुखायुर्यदि कोटिवक्त्रो भवेन्नरः क्वापि विशुद्धचेताः। स ते गुणानामयुतैकमंशं वदेन्न वा देववर प्रसीदे " त्यादि वाराहवचनाच्च। " निर्गुणमि " त्यादि श्रुतिस्तु हेयगुणनिषेधपरा, न तु प्रमाणान्तरप्राप्तसर्वज्ञत्वसत्यसङ्कल्पत्वसर्वनियमनादिरूपशास्त्रान्तरविहितगुणनिषेधपरा, " अ-

पहतपाप्मा विजरो विमृत्युर्विशोको विजिघत्सोऽपिपास" इति विशेषनिषेधदर्शनेन छागपशुन्यायेन तत्पर्यवसायिनी । "सत्वाद्यो गुणा नेशे" "न यत्र प्राकृता गुणाः" "विना हेयैर्गुणादिभिरि" त्यादिप्रमाणैर्निर्गुणश्रुतेर्विषयभेदश्च दर्शितः । अतोऽपरिमितगुणसागरं सविशेषं ब्रह्म न निर्विशेषम्, तत्र प्रमाणाभावात् । न तावत्प्रत्यक्षं तत्र प्रमाणम्, सविकल्पकनिर्विकल्पकभेदभिन्नस्य सविशेषजात्याद्यनेकविशिष्टविषयत्वात् । यत्तु भेदस्य दुर्निरूपत्वान्न तद्ग्राहकं प्रत्यक्षम्–किन्तु निर्विशेषसन्मात्रग्राहकमिति । तदयुक्तम्, इतरतादात्म्यारोपविरोधिज्ञानविषयो भेदः ; स च घटादेः जात्यादिः नीलादेः स्वरूपमिति भेदस्य सुनिरूपत्वात् । प्रत्यक्षस्य सन्मात्रग्राहित्वे घटमहं जानामीति प्रतीतिसिद्धघटत्वविशिष्टविषयकप्रतीत्यपलापापत्तिः, करभादिप्रतीतीनां सन्मात्रविषयत्वे करभाद्यविषयकत्वेनाश्वार्थिनः करभदर्शनेन निवृत्त्यनुपपत्तिः । करभादिपदशक्तिग्रहानुपपत्त्या सर्वव्यवहारोच्छेदः । वेदान्तवाक्यानां प्रत्यक्षसिद्धार्थानुवादकत्वप्रसङ्गश्च । अतः प्रत्यक्षं न रूपरूपिरूपैकार्थसमवेतत्वरहितचिन्मात्रग्राहकम्, तस्मान्न निर्विशेषे प्रत्यक्षं प्रमाणम् । नाप्यनुमानम्, तस्य प्रत्यक्षादिसिद्धसम्बन्धविशेषविशिष्टवस्तुविषयत्वात् । शब्दस्य तु विशेषेण सविशेषवस्त्वभिधानसामर्थ्यम्, पदवाक्यरूपेण प्रवृत्तेः । प्रकृतिप्रत्ययसमुदायरूपस्य पदस्य प्रत्ययार्थविशिष्टप्रकृत्यर्थतावच्छेदकविशिष्टवस्तुबोधकत्वेन सविशेषपरत्वात् ; पदभेदेऽर्थभेदावश्यकत्वात् अनेकपदार्थसंसर्गविशेषबोधकस्य पदसङ्घातरूपवाक्यस्यापि सविशेषपरत्वात् । तस्माच्छब्दो न निर्विशेषे प्रमाणम् । अतो न केनापि प्रमाणेन निर्विशेषवस्तुसिद्धिः ।

तच्च परं ब्रह्म दिव्यमङ्गलविग्रहवत्, "वेदाहमेतं पुरुषम्महान्तमादित्यवर्णमि" ति श्रुतेः । तच्च सर्वविलक्षणम्, "समस्ताश्च शक्त्यश्चैता नृप यत्र प्रतिष्ठिताः । तद्विश्वरूपवैरूप्यं रूपमन्यद्धरेर्महद्दि",

ति वचनात्। तच्च शरीरमप्राकृतम्, " न तस्य प्राकृतामूर्तिर्मांस-मेदोऽस्थिसम्भवे " ति तस्य प्राकृतत्वनिषेधवचनात्। नापि भौतिकम्, " न भूतसङ्घसंस्थानो देहोऽस्य परमात्मन " इति भौतिकत्वनिषेधात्। नापि परिणामि, " यस्य दिव्यं हि तद्रूपं क्षीयते वर्द्धते न क्षी " ति षड्भावविकारनिषेधात्। अतएव तन्नित्यम्, " स्त्री पुम्सकादियोगाच्च देहो विष्णोर्न जायते। किन्तु निर्दोषचैतन्यसुखां नित्यांस्विकां तनुम्। प्रकाशयति सेवेयं जनिर्विष्णोर्नचापरे " ति ब्रह्माण्डवचनात्। " वैकुण्ठे तु परे लोके नित्यत्वेन व्यवस्थितम्। अनन्तं ते विश्वकर्मे स्तव रूपं पुरातनम्। " " शाश्वतं च ध्रुवंचे " ति नित्यत्वोपदेशाच्च। न च सावयवत्वे नित्यत्वानुपपत्तिः, अवयवारब्धत्वरूपसावयवत्वस्यासिद्धेः, अवयवसम्बन्धित्वमात्ररूपसावयवत्वस्यात्मन्यनैकान्त्यात्। तस्मान्नित्यत्वं नानुपपन्नम्।

एतद्भगवतो रूपं पञ्चोपनिषन्मयं च। "शक्तयः पञ्चविख्याताः पञ्चोपनिषदाख्यया।" " पञ्चशक्तिमयोदेवः परमात्मा जगत्प्रभुः।" " पराभिश्शक्तिभिस्तत्र विग्रहः परमात्मनः। " इति तथोपदेशात्। एतदुक्तं भवति—पञ्चोपनिषदो नाम ओं षाम् नमः परायेति परमेष्ठ्यात्मने नमः, ओं याम् नमः परायेति पुरुषात्मने नमः, ओं राम् नमः परायेति विश्वात्मने नमः, ओं वाम् नमः, परायेति निवृत्त्यात्मने नमः, ओं लाम् नमः परायेति सर्वात्मने नमः इत्येवं रूपपञ्चोपनिषन्मन्त्राणां यानि षाम् – याम् – वाम् – राम् – लाम् इत्येवं रूपाणि बीजाक्षराणि तद्वाच्याः, " परमेष्ठी स्मृतः शब्दे स्पर्शे तु पुरुषः स्मृतः। विश्वात्मा तेजसः प्रोक्तो निवृत्त्यात्मा रसे स्मृतः। सर्वात्मा कथितो गन्धे विषये पुरुषःपरः " इति परमेष्ठि पुरुष विश्व निवृत्ति सर्वात्म संज्ञिकाः, शब्दस्पर्शरूपरसगुणकत्वेन भूतपञ्चकतया प्रतिपन्नाः, " पञ्चैताः शक्तयः प्रोक्ताः परस्य परमात्मनः। अशेषजगदाधाराः पदे दिव्ये व्यवस्थिता " इति वचनसिद्धा भगवच्छक्ति-

द्यते। तथा च श्रूयते " कामः सङ्कल्पो विचिकित्सा श्रद्धाऽश्रद्धा धृतिरधृतिर्ह्रीर्धीर्भीरित्येतत्सर्वं मन एव " इति। अत्र मनश्शब्दो ज्ञानपरः,— " मनसैतान्कामान्पश्यन्रमत " इत्यादिषु ज्ञाने मनश्शब्दप्रयोगदर्शनात्।

न च तत्रापि मनश्शब्दोऽन्तःकरणरूपमनोवाचक एवास्त्विति वाच्यम्, पश्यतीत्यनन्वयात्। न हि मनसो दर्शनसाधनत्वं सम्भवति। ज्ञानपरत्वे तु तस्य कामप्राप्तिद्वारा दर्शनसाधनत्वमस्तीति न विरोधः। ध्यानेन पुरुषं पश्यतीतिवत्। वस्तुतः " स यदि पितृलोककामो भवति सङ्कल्पादेवास्य पितरः समुपतिष्ठन्ते " " जानात्येवायमि " त्यादिषु मोक्षदशास्वात्मधर्मतयावगतानां कामसङ्कल्पादीनामन्तःकरणधर्मत्वानुपपत्तेः, " एतावदेव खल्वरेऽमृतत्वमि " ति तत्साधनत्वोपचारवानयं मनः शब्द इति तत्त्वम्।

ज्ञानाश्रयत्वाभिधानादेव ज्ञातृत्वभोक्तृत्वे अप्यात्मन एव, नान्तःकरणस्य, इच्छाप्रयत्नक्रियाभोगानां विषयग्रहणोत्तरभाविज्ञानीयावस्थाविशेषत्वात्। किञ्च संसारकारणमिथ्याज्ञानं मोक्षकारणतत्त्वज्ञानं यदाश्रयं तत्रैव बन्धमोक्षौ, अन्यथा अन्यकृतसुकृतदुष्कृतयोरन्यानुभाव्यत्वापत्तेः। तथा च मिथ्याज्ञानतत्त्वज्ञानाश्रयमन्तःकरणं स्यात्, बन्धमोक्षावपि तस्यैव स्यातां न पुंसस्य। तस्माज्ज्ञातृत्वमात्मनः सम्भवत्येव।

शेषत्वं चास्य " सर्वस्य वशी " " पतिं विश्वस्यात्मेश्वरम् " " प्रधानक्षेत्रज्ञपतिर्गुणेशः " इत्यादिश्रुतिसिद्धम्। अन्यस्य प्रयोजनमेव यस्य प्रयोजनं स शेषः–यथा प्रयाजादिः, यागप्रयोजनीभूतस्वर्गादिरेव हि प्रयाजादिप्रयोजनम्। चेतनाचेतनयोः भगवत्प्रयोजनीभूतलीलानिर्वृत्तिर्हि प्रयोजनम्। इदं शेषत्वं शरीरिणं प्रति शरीरस्यैवापृथक्सिद्धम्, "यस्यात्मा शरीरम्" "यानि मूर्तान्यमूर्तानि

यान्यत्रान्यत्र वा क्वचित्। सन्ति वै वस्तुजातानि तानि सर्वाणि तद्वपुः" इत्यादिषु परमात्मानं प्रति प्रत्यगात्मनां शरीरत्वविधानात्।

अयमात्मा देहादिविलक्षणः, "पञ्चविंश आत्मा भवति" "पञ्चविंशकोऽयं पुरुषः" "देहेन्द्रियमनःप्राणधीभ्योऽन्योऽनन्यसाधनः" "पञ्चभूतात्मके देहे देही मोहतमोवृतः। अहं ममेति चेत्युच्चैः कुरुते कुमतिर्मतिम्" इति श्रुतिपुराणवचनैस्तथात्वेनोपदेशात्।

अजडोऽयमात्मा, "हृद्यन्तर्ज्योतिः पुरुषः" "विज्ञानघन एव" "अत्रायं पुरुषः स्वयंज्योतिः" "अनन्यसाधनः" "आत्मा ज्ञानमयोऽमल" इत्यादिभिर्ज्ञानान्तरानपेक्षस्वप्रकाशत्वलक्षणज्ञानमयत्वेन प्रतिपादितत्वात्।

आनन्दरूपश्चायम्। आनन्दरूपत्वं नाम अनुकूलतया वेदनीयत्वम्, स्वस्य स [illegible]

अस्य सुखरूपत्वं [illegible]

चायमात्मा ज्ञानमयोऽमलः" "ज्ञानानन्दमयस्त्वात्मे" इत्यादिभिश्च सिद्धम्।

न च स्वाभाविकज्ञानानन्दस्वरूपे नाज्ञानादिदुःखादिसम्बन्धसम्भवः, विरोधादिति वाच्यम्,—स्वभावशीतलस्यापि जलस्यौष्ण्याद्याश्रयाग्निसम्बद्धस्थालीसंसर्गकृतौष्ण्यशब्दाद्यागन्तुकविकृतियोगवत्स्वाभाविकज्ञानानन्दस्याप्यात्मनस्त्रिगुणात्मकप्रकृतिसम्बन्धादविद्याकर्मवासनाद्यौपाधिकविकृतिपरम्पराजननोपपत्तेः। तथा चोक्तं पराशरेण,—

> जलस्योष्णाग्निसंसर्गिस्थालीसङ्गात्तथैव हि।
> शब्दोद्रेकादिकान्धर्मांस्तत्करोति तथा मुने ॥

तथात्मा प्रकृतेस्सङ्गादहंमोहादिदूषितः ।
भजते प्राकृतान्भोगानन्यस्तेभ्योऽपि सोऽव्ययः ॥

आत्मनस्सांसारिकप्रवृत्तिषु कर्तृत्वं सत्त्वरजस्तमोरूपगुणसंसर्गकृतम्, न तु स्वरूपप्रयुक्तम्,

" प्रकृतेः क्रियमाणानि गुणैःकर्माणि सर्वशः।
अहङ्कारविमूढात्मा कर्ताहमिति मन्यते ॥ "

इति वचनात्। तदपि कर्तृत्वं परमपुरुषायत्तम्, " परात्तु तच्छ्रुतेः " " कर्ता शास्त्रार्थवत्त्वात् " " एष एव साधुकर्म कारयति तं यमेभ्यो लोकेभ्य उन्निनीषती " त्यादि सूत्रश्रुतिभ्यस्तथावगतेः ।

नित्यश्चायम्, " नित्यो नित्यानाम् " " न जायते म्रियते वे " त्यादिश्रुतेः । " इमानि भूतानि जायन्ते " " प्रजापतिः प्रजा असृजत " " न ब्रह्मा नेशान " इत्यादिपूत्पत्तिविनाशकथन शरीरसयोगवियोगाभिप्रायम् ।

अणुश्चायमात्मा, " प्रद्योतेन एष आत्मा निष्क्रामति " " ये वैके चास्माल्लोकात्प्रयन्ति चन्द्रमसमेव ते सर्वे गच्छन्ति " इत्यादिषु उत्क्रान्तिगत्यादिश्रुतेः । " एषोऽणुरात्मा चेतसा वेदितव्यः " " वालाग्रशतभागस्य शतधा कल्पितस्य च । भागो जीवस्स विज्ञेयः " " आराग्रमात्रो ह्यवरोपि दृष्टः " इति श्रुतेश्च । हृदयदेशस्थितस्याणुभूतस्य पाणिपादादिषु सुखदुःखानुभवो मणिद्युमणिदीपादीनां देशविशेषस्थितानामपि प्रभया परा व्याप्तिवत्स्वधर्मभूतज्ञानेन समन्ताद्व्याप्तेरुपपद्यते । तथा च-छान्दोग्ये- " प्रज्ञया वाचं समारुह्य वाचा सर्वाणि नामान्याप्नोति । प्रज्ञया घ्राणं समारुह्य घ्राणेन गन्धानाप्नोति। प्रज्ञया चक्षुस्समारुह्य चक्षुषा सर्वाणि रूपाण्याप्नोति। प्रज्ञया श्रोत्रं समारुह्य श्रोत्रेण सर्वान् शब्दानाप्नोति ' इति ज्ञानद्वारा व्याप्तिरुक्ता ।

अविक्रियश्चायमात्मा, आत्मा शुद्धोऽक्षरः शान्तो निर्गुणः प्रकृतेः परः । प्रवृद्ध्यपचयौ नास्य एकस्याखिलजन्तुषु " इत्युक्तेः ।

सचायमात्मा प्रतिशरीरं भिन्न, "अजो ह्येको जुषमाणोऽनुशेते जहात्येनामि " ति बद्धमुक्तयोर्भेदेन व्यपदेशात् । एकत्वे एकस्य मुक्तत्वेऽन्यस्य संसारानुपलब्धिप्रसङ्गात् । अमुक्तत्वे "शुको मुक्त" इत्यादिश्रुतेर्विरोधापत्तेश्च । न " येन्द्रो मायाभि " रित्यविद्याबहुत्वकथनात् ' शुको मुक्त ' इत्यत्र शुकाद्यवभासहेत्वविद्यामात्रनाशः प्रतिपाद्यत इति युक्तम्—अविद्यान्तराणामनुच्छेदे तावन्मात्रेणाप्याश्वासाभावेन मोक्षसाधनारम्भानुपपत्तेः । अतो " नित्यो नित्यानामि " त्यादिश्रुत्यनुसारेणात्मनानात्वमङ्गीकार्यम् । एकत्वव्यवहार स्त्वाकारैक्यनिबन्धनः । " एको व्रीहिस्सुनिष्पन्नः सुभुष्टान् कुरुते जनानि ' त्यादिषुएकत्वव्यवहारस्य तन्निबन्धनत्वदर्शनात्, त तश्च स्वाभाविकज्ञानानन्दाद्याकारसाम्यात् प्रतिशरीरं भिन्नेष्वात्मसु एकत्वव्यवहाराद्यङ्कुराविरोध ।

स चात्मा त्रिविधः-बद्धो मुक्तो नित्यश्चेति। तत्रानाद्यविद्यातिरोहितस्वरूपा अन्यथाज्ञानविपरीतज्ञानदूषितास्तदनुगुणरागद्वेषादिपारवश्यादुल्लङ्घितभगवदाज्ञास्वरूपविरोधिविविधनिषिद्धाचाराः तदपराधानुरूपलब्धचतुर्विधशरीरप्रवेशाःतत्तच्छरीरोचितसुखदुःखोपेता बद्धाः । अनादिसंसारसम्बन्धनिरन्तरानुभूतविविधविचित्रदुःखपरम्परासमीक्षणसञ्जाततज्जिहासासमधिगतसदाचार्यसमाश्रयणप्राप्त वेदान्तविदितचिदचिदीश्वरविवेकसमनन्तरानुष्ठितत्रिविधत्यागपूर्वक कर्मजनिततैलधारावदविच्छिन्नस्मृतिसन्तानरूपभावनाहर्षितभगवत्प्रसादजनितसांसारिकसकलदुरितनिरसनपूर्वकपरमपदप्राप्तिमनन्तरसम्यगाविर्भूतस्वरूपाः मुक्ताः । कदाचिदप्यनाघ्रातसंसारगन्धस

म्बन्धगन्धा निरन्तरानुभूतभगवत्स्वरूपरूपगुणविभवविषयसम्भवनि, रतिशयप्रीतिबलात्कारकारितकमलाकामुकचरणारविन्दसर्वसामयिकसकलकैङ्कर्यसम्भवनिरतिशयानन्दसिन्धुसम्पद्गमेशप्रदसन्मुखारविन्दविकासचुळकीकृतसर्वानन्दसन्दोहा नित्याः। न चैवम्भूतनित्येषु मानाभावः, "तद्विष्णोः परमं पदं सदा पश्यन्ति सूरय" इति श्रुतेः। न चेयं मुक्तविषया, तेषां प्रत्येकं सदादर्शनानुपपत्तेः। नापि मुक्तप्रवाहविषया, "सदा पश्यन्तीति प्रत्येकविषयतया प्रतीतेः श्रुतेर्भङ्गापत्तेः। "तद्विप्रासो विपन्यवो जागृवांसस्समिन्धते, विष्णोर्यत्परमं पदमि" ति श्रुतिबलादपि नित्यसूरिसिद्धिः। विप्रासो–मेधाविनः। विपन्यवः–स्तुतिशीलाः। जागृवांसः अस्खलितज्ञानाः। विष्णोर्यत्परमं पदं तत्प्रसिद्धं स्तुवन्तः। समिन्धत इति वर्तमानापदेशात्सर्वकालसम्बन्धो ज्ञायते। ततश्च नित्यस्तावकसिद्ध्या नित्यसिद्धिः।

ननु जीवलक्षणं लक्ष्मीतत्त्वेऽतिव्याप्तम्; न च तस्य जीवकोट्यन्तर्भावः शङ्कनीयः, "अस्येशाना जगतो विष्णुपत्नी" "ईशाना देवी भुवनस्याधिपत्नी" –

"यथा सर्वगतो विष्णुस्तथैवेयं द्विजोत्तम।"
"एतया च विष्णुना चाम्ब जगद्व्याप्तं चराचरमि॥"ति

श्रुतिपुराणवचनैस्तस्येश्वरत्वावगमादिति चेन्न :– तस्येश्वरकोट्यन्तर्भावपक्षे लक्षणगतशेषत्वपदस्य मिथुनशेषत्वपरतयोक्तदोषाभावात्। न हि लक्ष्मीतत्त्वं लक्ष्मीपुरुषमिथुनशेषम्। वस्तुतस्तु न तस्येश्वरकोट्यन्तर्भावः, तथासतीश्वरद्वित्वापत्तेः। न चोदाहृतश्रुतिबलादीश्वरकोट्यन्तर्भावसिद्ध्या ईश्वरत्वस्य व्यासज्यवृत्तित्वकल्पनेन नेश्वरद्वित्वप्रसङ्ग इति युक्तम्। विष्णुपत्नीत्वनिबन्धनेश्वरत्वप्रतीतावपि निरुपाधिकेश्वरत्वस्य तत्राप्रतीतेः। लक्ष्मीतत्त्वस्य जगज्जन्मादिकारणत्वाभावेन ब्रह्मलक्ष्मणाव्याप्त्यापत्तेः। नित्यसूरिणामिव लक्ष्मीतत्त्व-

स्यापि सातिशयगुणतयाऽनन्तत्वाभावेन ब्रह्मत्वासिद्धेश्च । तस्मा-ज्जीवकोट्यन्तर्गतमेवेदं सत्त्वमिति दिक् ।

अथाचित्तत्त्वं निरूप्यते ।

सततविकारास्पदं ज्ञानानाश्रयमचित् । तत् त्रिविधं शुद्धसत्त्वं मिश्रसत्त्वं सत्त्वशून्यं चेति । तत्राद्यं कमनीयविग्रहयुक्तस्य भगवतो-दिव्यस्थानम्, तद्धि रजस्तमोरहिततया केवलसत्त्ववत्त्वेन ज्ञानानन्द-जनकं नित्यं निरवधिकतेजोरूपं अत्यद्भुतमपरिच्छिन्नं केवलभगवदि-च्छयैव गोपुरमण्डपादिरूपेण परिणामि । अत्र सर्वत्र प्रमाणं प्रागेव दर्शितम् । भगवतो नित्यमुक्तानां च ज्ञानान्तरमन्तरेण व्यवहारस-मर्थत्वादजडमाहुः, " न सन्दृशे तिष्ठति रूपमस्ये " ति श्रुत्या सं-सारिणं प्रति तथात्वादर्शनात् जडत्वमपि केचिदिच्छन्ति । आ-त्मस्वरूपात् धर्मभूतज्ञानादस्य विशेषः-अहंबुद्धिविषयत्वाभावात् शरीराद्याकारपरिणामात् शब्दादिविषयाश्रयत्वाच्चावगम्यते । एव-मात्मनो धर्मभूतज्ञानमप्यजडं नित्यं द्रव्यं च । अस्य ज्ञानतया स्व-प्रकाशत्वेनाजडत्वं " न विज्ञातुर्विज्ञातेरि " त्यादिश्रुत्या नित्यत्वं संयोगविभागादिगुणाश्रयत्वात् क्रियाश्रयत्वाच्च द्रव्यत्वं च । मला-धकुण्ठितमणिप्रकाशवत्प्रसरणाभावात्सुषुप्त्यादावनुपलब्धिः । न च धर्मिधर्मभूतज्ञानयोर्नित्यत्वद्रव्यत्वज्ञानत्वाद्यविशेषेण भेदासिद्धिः, धर्मिणः सङ्कोचविकासानर्हत्वस्वस्मैस्वयंप्रकाशत्वाणुत्वयुक्तत्वात् धर्मस्य च तद्विपरीतधर्मयोगाच्च भेदसिद्धेः ।

मिश्रसत्त्वं पुनस्सत्त्वरजस्तमोगुणकम् । " सत्त्वं रजस्तम इति गुणाः प्रकृतिसम्भवाः " " प्रकृतेः क्रियमाणानि गुणैः कर्माणि सर्वश " इत्यादिवचनैस्तस्य सत्त्वादिगुणकत्वसिद्धिः । तत्र प्रमाणं " विकारजननीमज्ञाम् " " अजामेकां लोहितशुक्लकृष्णामि " त्यादिश्रुतिः । " अचेतना परार्था च नित्या सततविक्रिया " 'त्रिगुणं तज्जगद्योनिरि" त्यादिस्मृतिश्च । अस्या विकारजनकत्वा-

द्दियाविरोधित्वाद्विचित्रकार्यकरत्वाद्भगवतश्चेतनोपकरणत्वाच्चेतन-मोहहेतुत्वात्प्रकृत्यविद्या माया नियतिर्मोहिनीत्यादिसंज्ञा भवन्ति। तदुक्तम्—"महामायेत्यविद्येति नियतिर्मोहिनीति च। प्रकृतिर्वासनेत्येषा लीलाभूतिरुदीर्यते" इति। "चतुर्विंशतिसंख्यातमव्यक्तं तत्त्वमुच्यते" इति वचनात् इयं चतुर्विंशतितत्त्वात्मिका। तत्र प्रकृतयस्त्वष्टौ, विकाराः षोडश। "अष्टौ प्रकृतयः षोडशकाश्च विकारा" इति श्रुतेः। तत्राष्टौ प्रकृतयः प्रकृतिमहदहङ्काराः पञ्चभूतानि च। तथोक्तम्—"अव्यक्तं च महांश्चैव तथाहङ्कार एव च। पृथिवी वायुराकाशमापो ज्योतिश्च पञ्चममि" ति। विकाराश्च शब्दादिविषयपञ्चकं च एकादशेन्द्रियाणि च। तथा चोच्यते—"श्रोत्राक्षिरसनाघ्राणत्वचस्सङ्कल्प एव च। शब्दरूपरसस्पर्शगन्धवाक्पाणिपायवः। उपस्थं पाद इत्येते विकाराष्षोडश स्मृताः" इति। तेषां तत्वानामादिभूता प्रकृतिः, "सर्वपूर्वा प्रकृतिरि" ति श्रुतेः।

इयं च प्रकृतिः अक्षरत्वविभक्ततमस्त्वाविभक्ततमस्त्व—रूपसूक्ष्मावस्थात्रयवती। तत्राक्षरावस्था प्रकृतेः पुरुषसमष्टौ सूक्ष्मरूपेणावस्थानम्। विभक्ततमस्त्वावस्था च पुरुषसहितायास्तस्यास्सर्वप्रमाणगोचरतयावस्थानम्। अविभक्ततमस्त्वावस्थानं तथाविधाया अपि भगवति नामरूपविभागानर्हावस्थापत्तिः। तथा च श्रूयते "अव्यक्तमक्षरे लीयते अक्षरं तमसि लीयते तमः परे देव एकीभवती" ति। अत्र एकीभावो नाम तमोरूपेणापि विभागानर्हावस्थापत्तिः। न च "प्रकृतिर्या मयाख्याता व्यक्ताव्यक्तस्वरूपिणी। पुरुषश्चाप्युभावेतौ लीयेते परमात्मनी" ति वचने प्रकृतेरक्षरादौ लयमनभिधाय परमात्मनि लयप्रतिपादनं कथमुपपद्यत इति वाच्यम्,—अक्षरतमसोस्सूक्ष्मावस्थाविशेषत्वेनात्यन्तभेदाभावेन तथोक्तेरविरोधात्। इयं च गुणसाम्यलक्षणा प्रकृतिः पुरुषाधिष्ठिता महदादिविकारान् जनयति। तथा च स्मृतिः—"मयाध्यक्षेण प्रकृतिस्सूयते सचराचरम्" इति।

तथा चोक्तं पराशरेण—

' प्रधान पुरुषं चैव प्रविश्यात्मेच्छया हरिः ।
क्षोभयामास संप्राप्ते सर्गे एवं व्ययाव्ययानि " ति ॥

गुणास्सत्वरजस्तमांसि । एते प्रकृतिस्वरूपानुबन्धिस्वभावाः प्रकृत्यवस्थायामस्पष्टाः, विकृत्यवस्थायां स्पष्टा भवन्ति । तत्र सत्वं ज्ञानसुखजनकं तदुभयसंगजनक च, " तत्र सत्वं निर्मलत्वात्प्रकाशकमनामयम्। सुखसङ्गेन बध्नाति ज्ञानसङ्गेन चानघे " ति वचनात्। रजश्च रागतृष्णाजनकम्। रागः—स्त्रीपुरुषयोरन्योन्यस्पृहा, तृष्णा शब्दादिविषयस्पृहा, सङ्गः पुत्रमित्रादिषु सम्बन्धिषु संश्लेषस्पृहा । तथा च गीत भगवता —

" रजो रागात्मकं विद्धि तृष्णासङ्गसमुद्भवम् ।
तन्निबध्नाति कौन्तेय कर्मसङ्गेषु देहिनमि " ति ।

तमो विपरीतज्ञानप्रमादालस्यनिद्राभयजनकम् । कर्तव्यकर्म परित्यज्यान्यत्र प्रवृत्तिहेतुव्यापारः प्रमादः । कर्तव्यकर्मप्रारम्भप्रतिबन्धकव्यापारः स्तब्धतादिरूप आलस्यम्। सर्वेन्द्रियोपरतिः निद्रा । मनोव्यतिरिक्तसकलेन्द्रियोपरति स्वप्नः। मनोव्यापारस्याप्युपरति सुषुप्तिः । सकलेन्द्रियव्यापारस्थितिः जाग्रत्त्वम्।

' तमस्त्वज्ञानजं विद्धि मोहनं सर्वदेहिनाम् । प्रमादालस्यनिद्राभिस्तन्निबध्नाति भारत " इत्युक्तत्वात् । सत्वादीनां गुणानां समत्वावस्थायामेतद्विकाराणां समत्वमस्पष्टत्वं च, तेषां गुणानां विषमत्वावस्थायां तु विषमा विकारा जायन्ते स्पष्टता च भवति । विषमविकारेषु प्रथमविकारो महान् । अव्यक्ताहङ्काराव्यवहितोत्तरपूर्वावस्थाविशिष्टं त्रिगुणद्रव्यं महत् । स च महानध्यवसायादिकार्यहेतुः । स च महान् सात्विकराजसतामसभेदात्त्रिविधः । महत्तत्त्वाद्दहमभिमानहेतुरहङ्कारो जायते । स च त्रिविधः—वैकारिकस्तैजसो भूतादिश्चेति। तत्र सात्विकाहङ्कारो वैकारिकः, राजसाहङ्कारस्तैजसः, तामसाहङ्कारो भूतादिः । तथा चोक्तम्—

" त्रिविधोऽयमहङ्कारो महत्तत्वादजायत।
वैकारिकस्सात्त्विकस्स्याद्राजसस्तैजसस्मृतः॥
भूतादिस्तामसः प्रोक्त" इति।

इन्द्रियावस्थाव्यवहितपूर्वावस्थं त्रिगुणद्रव्यमहङ्कारः। स चानात्मनि देहेऽहम्बुद्धिहेतुत्वादहङ्कारपदवाच्यः, नत्वहमर्थ-तया। त्याज्यस्तु गर्वापरपर्यायोऽहङ्कारः। सात्त्विकाहंकाराद्वैकारिकादिन्द्रियाणि जायन्ते। तानि चेन्द्रियाणि श्रोत्रत्वक्चक्षुर्जिह्वाघ्राणाख्यानि पञ्च ज्ञानेन्द्रियाणि, वाक्पाणिपाद पायूपस्थनामानि पञ्च कर्मेन्द्रियाणि, ज्ञानकर्महेतुभूतमेकं मनश्चेति एकादश। नच मनस इन्द्रियत्वे मानाभावः, " मनःषष्ठानीन्द्रियाणि " " इन्द्रियाणि दशैकं च पञ्च चेन्द्रियगोचराः " " देवा वैकारिका दश " " एकादशम्मनश्चात्र देवा वैकारिकाः स्मृताः " इत्यादिश्रुतिपुराणवचनैर्मनसा सहैकादशेन्द्रियसिद्धेः। तामसाद्भूतादिसंज्ञकादहङ्काराच्छब्दतन्मात्रम्। राजसस्तैजसोऽहङ्कार उभयानुग्राहकः, मात्रान्तराणि तत्तद्भूतैरुत्पद्यन्ते। तथा वचनम्—

" आकाशस्तु विकुर्वाणस्स्पर्शमात्रं ससर्जह।
ततो वायुर्विकुर्वाणो रूपमात्रं ससर्ज ह॥
ज्योतिश्चापि विकुर्वाणो रसमात्रं ससर्ज ह।
विकुर्वाणानि चांभांसि गन्धमात्रं ससर्जिरे॥ "

इति। भूतादितामसाहङ्कारात्प्रथमं शब्दतन्मात्रस्य तत आकाशस्य चोत्पत्तिः,

" भूतादेस्तु विकुर्वाणाच्छब्दतन्मात्रकं ततः।
शब्दतन्मात्रसहितादाकाशं शब्दलक्षणमि " ति

वचनात्। भूतेष्वपि पूर्वपूर्वस्मादुत्तरोत्तरस्योत्पत्तिः, " आकाशाद्वायुः, वायोरग्निः, अग्नेरापः, अद्भ्यःपृथिवी " ति श्रुतेः।

ाकाशं जायते तस्माचस्य शब्दं गुणं विदुः ।
आकाशात्तु विकुर्वाणात्सर्वगन्धवहः शुचिः ॥
बलवान् जायते वायुस्तस्य स्पर्शो गुणो मतः ।
वायोरपि विकुर्वाणाद्विरोचिष्णु तमोनुदम् ॥
ज्योतिरुत्पद्यते भास्वत्तद्रूपगुणमुच्यते ।
ज्योतिषोऽपि विकुर्वाणादापो रसगुणात्मकाः ॥
अद्भयो गन्धवहा भूमिरित्येषा सृष्टिरादिमे " ति

वचनाच । तन्मात्राणां व्यापारतया तैर्व्यवधानेऽपि न दोषः । शान्तत्वघोरत्वमूढत्वरहितानि शब्दादिगुणकानि भूतसूक्ष्माणि तन्मात्राणि । तथा चोक्तम् —

" तस्मिंस्तस्मिंस्तु तन्मात्रं तेन तन्मात्रता स्मृते " ति ।

तस्मिंस्तस्मिन्नाकाशादिभूते, तन्मात्रम्—शान्तत्वमूढत्वादिविशेषरहितं शब्दादिगुणमात्रम् तेन तस्मिंस्तस्मिंस्तत्त्वे तन्मात्रतेतिवचनार्थः। शान्तत्वादयो विशेषास्तन्मात्रतादशायामनभिव्यक्ताः, भूतावस्थायां त्वभिव्यक्ताः । शान्तत्वमनुकूलतया वेदनीयत्वम् , तच्च पृथिवीजलयोः । घोरत्वं नाम प्रतिकूलतया वेदनीयत्वम्, तच्च वायुतेजसोः। मूढत्वं नाम उदासीनतया वेदनीयत्वम् , तच्चाकाशे। सर्वाण्यपि भूतानि त्रिवृत्करणेन मिलितानि शान्तघोरमूढानि भवन्ति । अभिव्यक्तशान्तत्वादिविशेषराहित्यादविशेषशब्दवाच्यानि तन्मात्राणि शान्तत्वादिगुणानामनुद्भवात् भूतानि सूक्ष्माणि भवन्ति । राजसाहङ्कारस्तु सात्विकतामसाहङ्कारयोः स्वस्वकार्यदशाया प्रवर्तकः, " रज प्रवर्तक तत्र ' ति वायुक्तेः । महदाद्यनेकपरिणामपरम्परायामपि न प्रकृतिरपचीयते । तथोक्तम्—

दीपादेकाद्यथा दीपाः प्रवर्तन्ते सहस्रशः ।
प्रकृतिस्सूयते तद्वदनन्तान्नापचीयते ॥

एवमुक्तान् महदादिपदार्थान् परस्परमिलितान् ब्रह्माण्डाकारपरिणतान् करोति भगवान्,—

" महदाद्या विशेषान्ता ह्यण्डमुत्पादयन्ति त " इति स्मृतेः, " भूतेभ्योऽण्डं महाबुद्धे ब्रह्मैतदुदकेशयमि " ति वचनाच, तथाऽवगम्यते ।

" नानावीर्याः पृथग्भूतास्ततस्ते संहतिं विना ।
नाशक्नुवन् प्रजाः स्रष्टुमसमागम्य कृत्स्नश ॥
समेत्यान्योन्यसंयोगं परस्परसमाश्रयाः ।
महदाद्या विशेषान्ता ह्यण्डमुत्पादयन्ति ते ॥ " इति

वचनेऽन्योन्यसङ्गतानां मृत्सिकताजलानां घटादिपरिणामशक्तिवदाकाशादिभूतानामपि पञ्चीकृतानामेवाण्डोत्पादनसामर्थ्यावगते, पञ्चीकरणमण्डोत्पत्तावपेक्षितम् । तत्प्रकारस्तु आकाशं द्विधा कृत्वा एकमर्धमाकाशत्वेन स्थापयित्वा, अर्धान्तरं चतुरशं कृत्वा वायुतेजोजलपृथिवीषु चतुर्णामंशानां क्रमेण मेळनम् । एवं भूतान्तरेष्वपि ज्ञेयम् । तथाचोक्तं वायुना — " एवं जातानि भूतानि प्रत्येकं स्युर्द्विधा तत । चतुर्धा भिन्नमेकैकमर्धमन्यत्तथास्थितम् । व्योम्नोऽर्धभागाश्चत्वारो वायुतेजःपयोभुवाम् । अर्धानि यानि वायोस्तु व्योमतेजःपयोभुनामि " त्यादिना ।

" वायुनह्यनिलाकाशैस्तथा भूतादिना बहिः ।
वृतं दशगुणैरण्ड भूतादिर्महता तथा ।
अव्यक्तेन वृतो ब्रह्मंस्तैस्सर्वैस्सहितो महान् ।
एभिरावरणैरण्डं सप्तभिः प्राकृतैर्वृतम् ।
नारिकेळफलस्यान्तर्बीजं बाह्यदळैरिवे " त्यादिवच-

नादण्डं दशगुणितोत्तरैर्वारिवह्न्यनिलाकाशादिभिरावृतमित्यवगम्यते। एवम्भूताण्डमध्ये ब्रह्माणं सृजति भगवान्, " तस्य ध्यानान्तस्थस्य ललाटात्स्वेदोऽपतत्, ता इमा आपः, तासु हिरण्मयमण्डमभवत्, तत्र ब्रह्मा चतुर्मुखोऽजायते " इति श्रुतेः । अण्डान्तर्वर्तिपदार्थान् ब्रह्मादिचेतनान्तर्यामित्वेन सृजति,—

"यत्किञ्चित्सृज्यते येन सत्वजातेन वै द्विज ।
तस्य सृज्यस्य सम्भूतौ तत्सर्वं वै हरेस्तनुः ॥
सर्वस्थितिविनाशांश्च भगवान् मधुसूदनः ।
तैस्तैरूपैरमेयात्मा करोत्यव्याहतान्प्रभुरि ॥" ति

वचनात् । सृज्यमानपदार्थान् पूर्वनामरूपसदृशनामरूपयुक्तानेव सृजति भगवान्, "सूर्याचन्द्रमसौ धाता यथापूर्वमकल्पयत्" इति श्रुतेः ।

"सर्वेषां तु स नामानि कर्माणि च पृथक् पृथक् ।
वेदशब्देभ्य एवादौ देवादीनां चकार सः ॥" इति

वचनाच । एवं पदार्थान् सृष्ट्वा तत्रानुप्रविशति, "तत्सृष्ट्वा तदेवानुप्राविशदि" ति श्रुतेः । न चैकस्य सर्वानुप्रवेशानुपपत्तिः वायोरिव तदुपपत्तेः। तथा श्रूयते -"वायुर्यथैको भुवनं प्रविष्टो रूपं रूपं प्रतिरूपो बभूव । एकस्तथा सर्वभूतान्तरात्मा रूपं रूपं प्रतिरूपो बहिश्च" । यथा वायुरेकस्सन् प्राणादिरूपेण प्रतिशरीरं समाप्य वर्तते बहिश्च, एवं भगवान् सर्वकार्येषु अन्तर्बहिरपि वर्तत" इत्यर्थः अयमन्तर्विद्यमानः प्राणवदेकदेशे न तिष्ठति, अपि तु सर्वत्र, "तेनेदं पूर्णं पुरुषेण सर्वमिति" श्रुतेः । यावता वस्तु पूरितं भवति तथा व्याप्नोतीत्यर्थः । तथा च श्रूयते "स एष इहानुप्रविष्ट आनखाग्रादि" ति । वाय्वानीतजलकणनिकरं वायुर्यथा धत्ते तथा भगवानशेषं बिभर्तीति प्रतिपादनात् ।

संहरति च रुद्ररूपी भगवान्, "जगत्संहरते काले रुद्रमूर्त्या जनार्दन" इति वचनात् । संहारस्तावत्त्रिविधः–नैमित्तिकः प्राकृत आत्यन्तिक इति,–

"सर्वेषामेव भूतानां त्रिविधः प्रतिसञ्चरः ।
नैमित्तिकः प्राकृतिकस्तथैवात्यन्तिको मत" इति

वचनात् ।

तत्र नैमित्तिको नाम ब्रह्मणो रात्रिषु संप्राप्तत्रैलोक्यनाशः। प्राकृतिकस्तु ब्रह्मायुरवसानकाले पाताळादिसत्यलोकान्तेषु सर्वलोकेषु अनावृष्ट्यग्निसंवर्तैः परिक्षीणपदार्थेषु भूमेर्भूमित्वव्यवस्थापकगुणमापो ग्रसन्ति, ततो भूमिर्जलात्मिका भवति। एवं सप्तापि प्रकृतयः स्वस्वकारणतत्त्वं प्रत्याहारेण प्रविशन्ति. महान्तं च प्रकृतिर्ग्रसते। प्रकृतिश्च पुरुषे प्रलीयते, पुरुषे तस्याः सूक्ष्मरूपेणावस्थानमेव लयः, अकारणत्वात्पुरुषस्य। ततः—

"प्रकृतिर्या मयाऽऽख्याता व्यक्ताव्यक्तस्वरूपिणी।
पुरुषश्चाप्युभावेतौ लीयेते परमात्मनी" त्यविशेषेण

प्रकृतिपुरुषयोः परमात्मनि लयोऽभिधीयते। एतदुक्तं भवति-ताम्ररजतबिन्दुकल्पयोः प्रकृतिपुरुषयोः सुवर्णगिरिकल्पपरमात्मनि एकाकाररूपसंसर्ग एव प्रलयो वेदितव्यः, क्षीरार्णवे जलबिन्दुप्रक्षेपनत्। तथाच श्रुतिः—"तमः परे देव एकीभवती" ति। तथाभूतयोः हंसक्षीरन्यायेन पुनः पृथक्करणमेव सृष्टिश्चेत्यवगम्यते। आत्यन्तिकस्तु जन्महेतुभूताविद्याकर्मवासनादिभिस्सह पुनरुत्पत्तिनिवृत्तिहेतुभूतः प्रकृतिसम्बन्धविनाशः। स च मोक्षाख्यः। नैमित्तिको नाम ब्रह्मणो रात्रौ संप्राप्तत्रैलोक्यविनाशः—

"ब्राह्मो नैमित्तिकस्तेषां कल्पान्ते प्रतिसञ्चरः।" इति

तथोक्तत्वात्। प्राकृतस्तु ब्रह्मायुरवसानकाले प्रकृतिपर्यन्तो विनाशः, "प्राकृतो द्विपरार्धक" इत्युभयोर्भेदकथनात्। तत्र तावत्प्राकृतप्रळयोऽभिधीयते। परार्धद्वयावसाने प्राकृतप्रळयो भवति। ब्रह्मण आयुषोऽर्धं परार्धम्। सर्वस्य ब्रह्मणः वर्षशतमितमायुः। ब्रह्मायुषा च परिच्छिन्नः पौरुषो दिवसः, तस्यान्ते, महाकल्पो भवति पौरुषी निशा। एतच्च भगवतोऽहर्निशाभेदकथनमौपचारिकम्,—

"नैवाहो न निशा तस्य नित्यस्य परमात्मन"

इत्यहर्निशयोर्निषेधात्। एवमौपचारिकमगवदहरवसानरूपे ब्रह्मा-

युरवसानकाले समस्तेषु पाताळादिसत्यलोकान्तेषु अनावृष्ट्यग्निसंवर्तैः परिक्षीणपदार्थेषु भूमेर्भूमित्वव्यवस्थापकं गन्धाख्यं गुणमापो ग्रसन्ति, ततो भूमिर्जलात्मिका भवति। तथोक्तम्—

" अनावृष्ट्यग्निसंवर्तैः कृते संप्लावने मुने।
समस्तेष्वेव लोकेषु पातालेष्वखिलेषु च॥
आपो ग्रसन्ति पूर्वं तु भूमेर्गन्धात्मकं गुणम्।
प्रणष्टे गन्धतन्मात्रे भवत्युर्वी जलात्मिके " ति॥

एवं सप्त प्रकृतयः स्वस्वकारणतत्वं प्रविशन्ति,—

" एवं सप्त महाबुद्धेः क्रमात्प्रकृतयः स्मृताः।
प्रत्याहारे तुतास्सर्वाः प्रविशन्ति ततः परमि " ति

तथोपदिष्टत्वात्। महान्तं च प्रकृतिर्ग्रसते, " महान्तमेभिस्सहितं प्रकृतिर्ग्रसतेऽजजे " ति वचनात्। प्रकृतिश्च पुरुषसमष्टौ प्रलीयते,

" अव्यक्तं पुरुषे ब्रह्मन्निष्कले सम्प्रलीयत " इति

भारताभिधानात्। अव्यक्तस्य पुरुषे सूक्ष्मरूपेणावस्थानमेव लयः, अकारणत्वात्पुरुषस्य। तथोक्तं पराशरेण—

" प्रधानपुंसोरजयोः कारणं कार्यभूतयोरि " ति।

अथ सत्वशून्यमचित्कालः। अस्य सत्वशून्यत्वं गुणत्रयवैधुर्यात्। न च सत्वशून्यमित्युक्ते कथं गुणत्रयराहित्यमिति वाच्यम्, सत्वशब्देन रजस्तमसोरप्युपलक्षणात्। अयं प्रकृतिप्राकृतपरिणामहेतुः कलाकाष्ठादिपरार्धपर्यन्तकल्पितविकारयुक्तः नित्यभगवल्लीलोपकरणः तच्छरीरश्च,—

" प्रधानपुरुषव्यक्तकालाश्च प्रविभागशः।
रूपाणि स्थितिसर्गान्तव्यक्तिसद्भावहेतवः॥
अनादिर्भगवान् कालो नान्तोऽस्य द्विज विद्यते।"

इत्यादिवचनात्तत्प्रतीतेः। एते च बद्धमुक्तनित्याश्चेतनाः शुद्धसत्व

मिश्रसत्वसत्वहीनशब्दनिर्दिष्टदिव्यस्थानत्रिगुणात्मकप्रकृतिकालरूपाण्यचेतनानि च भगवतो विभूतयः,—

" ब्रह्मादक्षादयः कालस्तथैवाखिलजन्तवः ।
विभूतयो हरेरेता जगतस्सृष्टिहेतवः ।
प्रकृतिस्सर्वकार्याणां कारणं त्रिगुणात्मकम् ।
स्थानं लीलारमस्येयं हरेरखिलदेहिन " इत्यादि

वचनात् ।

अत्रेदं तत्वम्—" सत्यं ज्ञानमनन्तं ब्रह्म " " तत्त्वमसि " " सर्वं खल्विदं ब्रह्म " " ऐतदात्म्यमिदं सर्वं स आत्मा तत्त्वमसी " त्यादिवाक्यैस्सामानाधिकरण्येन तादात्म्यमुपदिश्यते । तत्र—" सत्यं ज्ञानमि " त्यादिशोधकवाक्यं अतद्व्यावृत्तिमुखेन वस्त्वैक्यपरम्, "तत्त्वमस्या" दिवाक्यं अन्वयमुखेनोपलक्षितवस्त्वैक्यपरम् । "सर्वं खल्वि" त्यादिवाक्यमतात्विकरूपारोपणेन सामानाधिकरण्यमाश्रित्य वस्त्वैक्यपरम्-" ज्योतींषि विष्णुर्भुवनानि विष्णुरि " त्यादिवाक्ये बाधार्थतया सामानाधिकरण्यमाश्रित्य स्वरूपैक्यपरमिति परोक्तेः, मृद्घट इति स्वरूपैक्येऽपि सामानाधिकरण्यप्रयोगदर्शनात्, स्वरूपैक्यनिबन्धनम् ।" उत गोपा बभूवुक्षपयोहरिभक्तिसुधोदया"इत्यादिष्विव शरीरिशरीरभावनिबन्धनमिति सन्देहे, " सर्वं खल्विदं " ज्योतींषि विष्णुरि " त्याद्यचेतनविषयसामानाधिकरण्यवाक्ये चेतनाचेतनयोरैक्यायोगेन सामानाधिकरण्ये निमित्तान्तरकल्पनायां गौरवम्, क्वचित्स्वरूपैक्येन क्वचिद्बाधार्थत्वेन सामानाधिकरण्याश्रयणे वैरूप्यापत्तिः सत्यज्ञानादिशोधकवाक्यानामतद्व्यावृत्तिपरत्वे सत्यादिपदानामसत्यादिविषयकज्ञानजनकत्वे लक्षणापत्तिः, स्वरूपमात्रप्रत्यायकत्वेपदान्तरवैयर्थ्यं पर्यायत्वंच भवति ; तत्त्वमसीत्यादिवाक्यानां स्वरूपैक्यमात्रपरत्वे तत्त्वंपदोपस्थापिताकारपरित्यागाल्लक्षणा, सामानाधिकरण्यानुपपत्तिः ; तदेक्षते-

त्यादिसर्वज्ञत्वप्रतिपादकप्रकरणविरोधः, सर्वस्य मिथ्यात्वे ब्रह्मज्ञान-विषयत्वायोगेन एकविज्ञानेन सर्वविज्ञानप्रतिज्ञाविरोधापत्तिः, मिथ्यात्वेन ज्ञातं भवतीत्यर्थकल्पनायां मिथ्यात्वेनेत्यध्याहारापत्तिः, बाधार्थसामानाधिकरण्याभ्युपगमे तत्त्वम्पदलक्षणा प्रकरणविरोधः, सर्वविज्ञानप्रतिज्ञाविरोधः, रज्जुः सर्पः स्थाणुश्चोर इत्यत्र न सर्पो नचोर इतिवद्बाधादर्शनेन रज्जुत्वादिवद्बध्यमाणाकारविरोधिरवाकारादर्शनेन चात्र बाधार्थसामानाधिकरण्यानुपपत्तिः। यस्मिन्नवगते ऽन्यतादात्म्यारोपो न भवति तदेव विरोधि। नच ब्रह्मण्यवगते प्रपञ्चभ्रमो वार्यते? येन शौक्ल्यादिवद्ब्रह्मस्वरूपं विरोधि स्यात्। नच ब्रह्म कस्यचिद्व्यावर्तकाकारः, येन घटत्वादिवद्विरोधि स्यात्। नचासत्यसर्वज्ञत्वारोपेण प्रपञ्चभ्रमनिवृत्तिर्भवति,वृन्ते भ्रमरत्वारोपेण पलाशकुसुमेदावत्वभ्रमनिवृत्तिवदितिवाच्यम्-तत्रापि परमार्थपलाशकुसुमत्वाकारेणैव दावत्वनिवृत्तेः, सर्वज्ञत्वभ्रमरत्वगोचराज्ञानस्य निवर्तकत्वे तस्यापि भ्रमत्वेन तन्निवृत्तिरसत्यविषयभ्रमान्तरेणेति भ्रमपरम्परया निश्शेषाविद्यानिवृत्त्यनुपपत्तेश्च। किञ्च "तत्त्वमसी" त्याद्यैक्योपदेशस्य "सत्यंज्ञानमि" त्यादिवाक्यजन्यज्ञानानतिरिक्तविषयत्वे ऐक्योपदेशवैयर्थ्यम्, स्वरूपस्य तेनैव सिद्धेः। अतिरिक्तविषयत्वे सविशेषत्वापत्तिः। अतस्तादात्म्योपदेशो नस्वरूपैक्यनिबन्धनः किन्तु शरीरशरीरिभावनिबन्धन एव, "अन्तःप्रविष्टश्शास्ता जनानां सर्वात्मा" "तदनुप्रविश्य सच्चत्यच्चाभवदि" ति "स एव सर्वभूतात्मा विश्वरूपो यतोऽव्ययः।" "सर्वगत्वादनन्तस्य सर्व इत्यभिधीयते" "सर्वं समाप्नोपि ततोऽसि सर्व" इत्यादि श्रुतिस्मृतिपुराणेषु तस्य शरीरशरीरिभावनिबन्धनत्वावगमात्। "अस्मान्मायी सृजते विश्वमेतत्। तस्मिंश्चान्यो मायया सन्निरुद्धः" "मायां तु प्रकृतिं विद्यान्मायिनंतु महेश्वरम्।" "क्षरं प्रधानममृताक्षरं हरः।" "भोक्ता भोग्यं प्रेरितारञ्च मत्वा जुष्टस्ततस्तेनामृतत्वमेति"

"सकारणं करणाधिपाधिपः। नचास्य कश्चिज्जनिता नचाधिपः" "प्रधानक्षेत्रज्ञपतिर्गुणेशः।" "पतिंविश्वस्यात्मेश्वरम्।" "ज्ञाज्ञौ द्वावजावीशनीशौ" "नित्यो नित्यानां चेतनश्चेतनानामेको बहूनां यो विदधाति कामान्," "तयोरन्यः पिप्पलं स्वाद्वत्ति अनश्नन्नन्योऽभिचाकशीति," "अजामेकां लोहितशुक्लकृष्णां बह्वीं प्रजां जनयन्तीं सरूपाम्। अजो ह्येको जुषमाणोऽनुशेते जहात्येनां भुक्तभोगामजोऽन्यः॥"—

" अहङ्कार इतीयं मे भिन्ना प्रकृतिरष्टधा।
अपरेयमितस्त्वन्यां प्रकृतिं विद्धि मे पराम्।
जीवभूतां महाबाहो ययेदं धार्यते जगत्।"

" सर्वभूतानि कौन्तेय प्रकृतिं यान्ति मामिकाम्।
कल्पक्षये पुनस्तानि कल्पादौ विसृजाम्यहम्॥"

" प्रकृतिं स्वामवष्टभ्य विसृजामि पुनःपुनः।
भूतग्राममिमं कृत्स्नमवशं प्रकृतेर्वशात्॥"

इत्यादि बहुश्रुतिस्मृतिषु तत्त्वत्रयभेदस्य प्रतिपादनात्, तादात्म्योपदेशः शरीरशरीरिभावनिबन्धन इति सिद्धम्। न च त्वंशब्दो यदि जीवपरस्तदा ऐक्यानुपपत्तिस्त्वंशब्दलक्षणावेति वाच्यम्,—"ऐतदात्म्यमि" त्यादिवाक्ये सर्वशब्दोपस्थापिते चेतनाचेतनसामान्ये ऐतदात्म्यमिति वैयधिकरण्येनोक्तस्य ब्रह्मात्मकत्वस्य सामानाधिकरण्येन श्वेतकेतुरूपाभिमुखचेतनविशेषनिष्ठत्वज्ञापनाय प्रवृत्तेनानुवादरूपे वाक्ये त्वंशब्देन जीवमुपस्थाप्य तच्छब्दे सर्वज्ञत्वादि कल्याणगुणविशिष्टभगवच्छरीरत्वज्ञापने पूर्वोक्तदोषाभावात्।

वस्तुतस्त्वत्र त्वंशब्दोऽभिमुखचेतनशरीरकपरमात्मपरः, तच्छब्दस्सर्वज्ञत्वादिकल्याणगुणविशिष्टब्रह्मपरः, तथा च जीवशरीरकस्य कल्याणगुणविशिष्टब्रह्माभेदोऽत्र बोध्यते। नचैवं त्वंशब्दलक्षणा?

यस्यात्मा शरीरमि" त्यात्मनः शरीरत्वावगमात्, देवे मनुष्यो जात इत्यादिषु शरीरवाचिशब्दानां शरीरिपर्यन्ततया लोकसिद्धत्वाच्च लक्षणाविरहात्। "तद्धेदं तर्ह्यव्याकृतमासीदि" ति श्रुतौ, तत्–ब्रह्म नामरूपाभ्यां भिन्नतया व्याक्रियते ज्ञाप्यत इति नाम्नो ब्रह्मज्ञानकरणताया अवगमेन बोधजनकतावच्छेदकशक्तेर्ब्रह्मणिसिद्धेः। "नामरूपाभ्यामि" तीत्थंभावे तृतीयामङ्गीकृत्य नामरूपविशिष्टं ब्रह्म व्याक्रियत इत्यर्थाङ्गीकारपक्षे नामरूपविशिष्टत्वसिद्ध्या वाच्यत्वसिद्धेः। नच वैशिष्टयमात्रसिद्धावपि न वाच्यतासिद्धिरिति वाच्यम्; वैशिष्टयस्य वाच्यतारूपत्वात्। अन्यथा पुत्रादिनामकर्तरि पित्रादौ घटादिशब्दोच्चारयितरि पुरुषे घट पटादिनामोपादाने गगने च पुत्रघटादिनामवानित्यव्यवहारापत्तेः, पुरुषे कर्तृत्वसम्बन्धस्य गगने उपादानत्वाख्य सम्बन्धस्य च सत्त्वात्। तस्माद्वाच्यतैव नामवैशिष्टयम्। "नताः स्म सर्ववचसां प्रतिष्ठा यत्र शाश्वती" "वचसां वाच्यमुत्तममि" त्यादिवचनबलादपि सर्वशब्दवाच्यत्वं ब्रह्मणः सिद्धम्। असीति शब्दार्थस्य विशेषणीभूतचेतनान्वयान्न विरोधः। नच विशेषणान्वये स्वारस्यभङ्गदोषः, प्रथमश्रुतानेक 'तत्त्वं' पदास्वारस्यापेक्षया अस्य हेयत्वाभावात्। तस्मादद्वैतश्रुतीनाम् "अन्तः प्रविष्टश्शास्ता जनानां सर्वात्मा" "यस्य पृथिवी शरीरं यस्यात्मा शरीरमि" त्यादिघटकश्रुत्यनुसारेण विशिष्टाद्वैतपरत्वेन विरोधाभावादुक्तबहुश्रुतिस्मृतिपुराणादिभिस्तत्त्वत्रयमवश्यमङ्गीकर्तव्यम्।

"यतो वै" त्यादिना जगत्कारणत्वं ब्रह्मणो लक्षणमुक्तम्। तच्चोपादानत्वरूपं कर्तृत्वरूपं च। उपादानत्वमचितः परिणामयितृत्वम्। "बहु स्यामि" त्युपादानत्वमुक्त्वा, "प्रजायेयेति परिणामयितृत्वस्योक्तेः। अचेतनानां कार्यत्वं स्वरूपान्यथाभावः।

चेतनान्प्रत्युपादानत्वं चात्यन्तसूक्ष्मज्ञानादिमत्तयावस्थितानां करण कलेबरप्रदानपूर्वकज्ञानविकासरूपस्वभावान्यथाभावयितृत्वम् । तेषां कार्यत्वं स्वभावान्यथाभावः । जगत्स्थितिकारणत्वं सृष्टपदार्थ जाते सस्यादिष्वम्बुवत्तदनुकूलतया प्रविश्य तदुज्जीवनकारणत्वम् । संहारस्तु जनकादिभिरविनीततनयादेर्निगळादिबन्धनमिव विष यान्तरसञ्चरणशीलकरणविश्लेषकरणम् । ईश्वरस्य जगत्सृष्टिकर्तुः क्रीडतो बालकस्येव तात्कालिकरस एव । तथाचोक्तम्—

"क्रीडतो बालकस्येव चेष्टां तस्य निशामये" ति ।

"अप्रमेयोऽनियोज्यश्च यत्र कामगमो वशी ।

मोदते भगवान् भूतैर्बालः क्रीडनकैरिवे" ति च ।

इदानीं चिदचिदीश्वराणां गुणा निरूप्यन्ते । तत्र जीव गुणाः— प्रत्यक्षानुमानागमस्मृतिसंशयनिर्णयविपर्ययभ्रमविवेकव्य वसायमोहरागद्वेषमदमात्सर्यधैर्यचापल्यदम्भलोभक्रोधगर्वस्तम्भद्रो हाभिनिवेशनिर्वेदादयः, सुमतिर्दुर्मतिः प्रीतिस्तुष्टिरुन्नतिः शान्तिः कीर्तिः विरक्तिः रतिः मित्रता दया मुमुक्षा लज्जा तितिक्षा विचा-रणा जिगीषा मोदः क्षमा विचिकीर्षा जुगुप्सा भावुका छद्मना अमूया जिघांसा तृष्णा दुराशा वासना दुर्वासना सौम्या श्रद्धा भक्तिः प्रपत्तिश्चेत्येवमादयः । एते धर्मभूतज्ञानावस्थाविशेषाः ।

अथेश्वरगुणाः-ज्ञानबलैश्वर्यवीर्यतेजस्सौशील्यवात्सल्यमार्दवा-र्जवसौहार्दसाम्यकारुण्यमाधुर्यगांभीर्यौदार्यचातुर्यस्थैर्यधैर्यपराक्रमा दयो ज्ञानशक्त्योर्विततिभृताः । तत्र ज्ञानं नाम सर्वसाक्षात्काररूपम् । शक्तिरघटितघटनासामर्थ्यम् । बलं धारणसामर्थ्यम् , नियमनसा मर्थ्यं च । वीर्यमविकारिता । तेजः पराभिभवनसामर्थ्यम् । सौशील्यं महतो मन्दैस्सह नीरन्ध्रेण संश्लेषः । वात्सल्यं दोषेऽपि गुणत्वबुद्धिः,

दोषादर्शित्वं वा। मार्दवमाश्रितविरहासहत्वम्। मनोवाक्कायैक्य रूप्यमार्जवम्। स्वसत्तामनपेक्ष्य रक्षापरत्वं सौहार्दम्। जन्मवृत्तगुणाद्यनपेक्षं सर्वैराश्रयणीयत्वं साम्यम्। स्वार्थानपेक्षपरदुःखप्रहाणेच्छा कारुण्यम्, परदुःखदुःखित्वं वा। क्षीरवदुपायभावेऽपि स्वादुत्वं माधुर्यम्। भक्ताग्रहवदान्यत्वादेरामूलतो दुरवगाहत्वं गाम्भीर्यम्। अपरिमितं दत्वाप्यतृप्तिमत्त्वमौदार्यम्। गृहीतदोषगोपनं चातुर्यम्। अकम्पनीयत्वं स्थैर्यम्। अभग्नप्रतिज्ञत्वं धैर्यम्। परबलप्रवेशसामर्थ्यं शौर्यम्। परबलनिराकरणं पराक्रमः।

चिदीश्वरयोर्धर्मभूतज्ञानं गुणभूतम्। तच्चाचेतनं स्वप्रकाशं विषयि विभुद्रव्यं प्रभावद्द्रव्यगुणात्मकंच। नचास्य कथं द्रव्यत्वम्? द्रव्याश्रितत्वात्। न हि द्रव्यापृथग्भूतस्य रूपादेर्द्रव्यत्वसम्भव इति वाच्यम्; 'धर्मभूतं च तज्ज्ञानं सङ्कोचिच विकासिच। द्रव्यं प्रभावद्द्रव्यस्य धर्मो लोकमतेस्तथे" ति युक्तया तस्य द्रव्यत्वनिश्चयात्। द्रव्यत्वञ्च स्वाश्रयानन्तरकालोत्पत्तिकापृथक्सिद्धधर्मयोगित्वम्। तच्च सङ्कोचविकासरूपधर्मवति धर्मभूतज्ञानेऽस्त्येव। नच चेतनेश्वरयोस्तथाविधधर्माभावादद्रव्यत्वापत्तिः, तत्तद्द्रव्यसंयोगरूपधर्मसत्त्वेन द्रव्यत्वसम्भवात्। अपृथक्सिद्धधर्माश्रयत्वं रूपत्वाद्यपृथक्सिद्धधर्मवति रूपेऽपि गतम्, अतः स्वाश्रयानन्तरकालोत्पत्तिकत्व विशेषणम्। रूपत्वादेः रूपेण सहैवोत्पत्तिरिति नातिप्रसङ्गः। एतेनोन्मेषाद्यवस्थाश्रये सत्त्वादिगुणे नातिव्याप्तिः, उन्मेषादेः सत्त्वादिना सहैवोत्पत्तया स्वाश्रयानन्तरोत्पत्तिकत्वाभावात्, सत्त्वादिगुणभूयस्त्वरूपत्वेनोन्मेषस्य धर्मत्वाभावाच्च। रूपरसादिरूपस्वाश्रयानन्तरोत्पत्तिकेच्छादीन्प्रति विषयतया आश्रये रूपत्वादावतिव्याप्तिवारणाय अपृथक्सिद्धेति विशेषणम्। विस्तरस्तु न्यायसिद्धाञ्जनादौ द्रष्टव्यः।

स्वप्रकाशत्वं च— स्वकालिकस्वव्यवहारे स्वगोचरस्वातिरिक्त संविदन्तरापेक्षानियमरहितत्वम् । धर्मभूतज्ञानस्यापि व्यवहारे स्वाश्रमकर्मविदपेक्षत्वादनम्भवनाराणायान्तरपदम् । कदाचिज्ज्ञानान्तरेणापि तद्व्यवहारान्नियमपदम् । धर्मभूतज्ञानापेक्षानियमादसम्भवव्युदासाय स्वगोचरेति । अतीतादिज्ञानातिव्याप्तिवारणाय स्वकालिकेति व्यवहारविशेषणम् । इदञ्च स्वप्रकाशत्वं चिदीश्वरयोर्धर्मभूतज्ञानानां दिव्यस्थानस्य च साधारणम् । अजडत्वमपि निरुक्तस्वरूपसाधारणम् । स्वस्मा एव प्रकाशमानत्वं प्रत्यक्त्वं चिदीश्वरयोः साधारणम् । "अपहतपाप्मा विजरो विमृत्युर्विशोको विजिघत्सोऽपिपासस्सत्यकामस्सत्यसङ्कल्प" इत्यादिश्रुत्युक्ता अपहतपाप्मत्वादयो जीवेश्वरसाधारणाः । जीवस्य संसारदशायां कर्मणा तिरोधानात् मुक्तिदशायामेवैते गुणा आविर्भवन्ति ।

नन्वपहतपाप्मत्वं यदि प्रध्वस्तपापकत्वं तदेश्वरनित्ययोः पापप्रसक्तिशून्ययोस्तदभावापत्तिः, यदि पापात्यन्ताभावः तदा जीवे तदनुपपत्तिः, कदाचित्पापवति तदत्यन्ताभावासम्भवादिति चेन्न ; अतिरिक्ताभावानभ्युपगन्तृमते केवलाधिकरणकालसम्बन्धरूपस्यात्यन्ताभावस्य मुक्तिदशायां जीवे सम्भवात्। न च तस्य मुक्तिकालीनोत्पत्तिकस्य संसारदशायामसत्त्वेन कर्मणा तिरोहितत्वानुपपत्तिरिति वाच्यम् ; नियमानत्वे सत्यप्रकाशनरूपतिरोधानानुपपत्तावप्युत्पत्तिनिरोधरूपतिरोधानस्य सम्भवात्। एते चापहतपाप्मत्वादयो गुणा जीवस्यौपाधिकाः, भगवत्सङ्कल्पाधीनत्वात् । ब्रह्मणस्तु स्वाभाविकाः । एतदभिप्रायेणापहतपाप्मत्वं ब्रह्मणो लक्षणमिति वदन्ति ।

प्रकृतिकालचेतनेश्वरधर्मभूतज्ञानदिव्यस्थानात्मकद्रव्यमात्रसाधारणः संयोगश्चेतनेश्वरयोरपि गुणः । जीवानां सत्त्वरजस्तमांसि गुणास्सन्ति । अचेतनानां मध्ये प्रकृतिपरिणामभूतानां द्रव्याणां

सत्त्वरजस्तमांसि संयोगशक्तिश्च, साधारणाः । गन्धव्यतिरिक्ताश्शब्दादयो जलस्य, गन्धसहितास्त एव पृथिव्याः ।

" शब्दः स्पर्शश्च रूपं च तेजस्यथ गुणास्त्रयम् ।
शब्दस्पर्शश्च वायोस्तु आकाशे शब्द एव च ।
शब्दस्स्पर्शश्च रूपं च रसो गन्धश्च भूमिगाः ।
चत्वारोऽप्सु गुणा राजन् गन्धस्तत्र न विद्यते ॥

एवं पञ्चगुणा राजन् महाभूतेषु पञ्चस्वि " ति भीष्मपर्व वचनेन पृथिव्यादीनां रूपादयो विशेषगुणा दर्शिताः ।

इति श्रीवात्स्यकुलतिलकेन श्रीनिवासार्यतनयेन श्रीनिवासानुजेन तच्चरणारविन्दसेवासमधिगतसकलशास्त्रार्थेन वरदाचार्येण कृते रामानुजसिद्धान्तसारप्रकाशे तत्त्वत्रयनिरूपणं समाप्तम् ।



॥ श्रीः ॥

तदेवं तत्त्वत्रयस्वरूपविवेचनेनाखिलजगदुदयविभवलयैककारणतया निर्दोषानन्तकल्याणगुणकतया परस्य ब्रह्मणः श्रीमन्नारायणस्य स्वेतरसमस्तवस्तुविलक्षणस्वरूपज्ञानमुत्पद्यते, तदेव सांसारिकाखिलदुरितनिरसनपूर्वकं परमपुरुषार्थलक्षणमोक्षसाधनं भवति । तथा च श्रूयते "तमेवं विद्वानमृत इह भवति नान्यः पन्था अयनाय विद्यते " " ब्रह्मविदाप्नोति परमि" ति । अत्र हि "वेदाहमेतं पुरुषं महान्तं आदित्यवर्ण " मिति पूर्ववाक्ये प्रतिपन्नं महत्त्वादित्यवर्णगुणकं पुरुषं 'तमेवमि' तिशब्दाभ्यां परिगृह्य तद्वेदनस्य मोक्षसाधनत्वकथनात् तज्ज्ञानमेव मोक्षसाधनं नान्यदिति स्पष्टं प्रतीयते । " ब्रह्मविदाप्नोती " त्यत्र ब्रह्मज्ञानं मोक्षसाधनमवगम्यते । तथाच ब्रह्मादित्यवर्णः पुरुषः, तज्ज्ञानमेव मोक्ष

साधनमिति सिध्यति। नच "पुरुषात्मात्ममानवावि" ति निघण्टु बलादात्मसामान्यशक्तः पुरुषशब्दो रुद्रनारायणसाधारण इति कथं पुरुषशब्दो नारायणपर इति वाच्यम्, — "स्त्रीप्रायमितरत्सर्वम्।"

"ब्रह्माद्यास्सकला देवा यक्षतुम्बुरुकिन्नराः।
ते सर्वे पुरुषांशत्वादुच्यन्ते पुरुषा इति॥
यथाभास्करशब्दोऽयमादित्ये व्यवतिष्ठते।
यथा शङ्करशब्दोयं महादेवे व्यवस्थितः॥
तथा पुरुषशब्दोऽयं वासुदेवे सनातने।"
"भगवानिति शब्दोऽयं तथा पुरुष इत्यपि।

निरुपाधी च वर्तेते वासुदेवे सनातने।" इत्यादिषु भगवत्येव मुख्यतायाः अन्यत्र लक्षणायाश्चावगमेन निघण्टुवचनस्यानादरणीयत्वात्। कर्मनापवर्गकारणमिति कर्मापि कारणमिति चानुपपन्नम्, "नान्यः पन्था" इति श्रुतिविरोधात्। "यज्ञेन दानेन तपसा नाशकेन ब्राह्मणा विविदिषन्ती" ति ज्ञानकरणत्वबोधकश्रुतिविरोधात्। "कषाये कर्मभिः पक्वे ततो ज्ञानं प्रवर्तत" इति वचनविरोधात्। तेषामप्यपवर्गहेतुत्वे तत्तदाश्रमविहितानां तेषामुत्कर्षवत्त्वेन 'कर्मभूयस्त्वात्फलभूयस्त्वमि' ति न्यायेन मोक्षस्य सातिशयत्वेनानित्यत्वादिदोषापत्तेश्च। अतः स्वतन्त्रमेव ज्ञानमपवर्गकारणम्। स्वर्गं प्रति अपूर्वद्वारा याग इव ज्वालाद्वारा पाके काष्ठ इव ज्ञानंप्रति मनोनैर्मल्यद्वारा कर्म कारणमिति सिद्धम्। तदेवं वेदान्तवाक्यैर्विधित्सितं वेदनं उपासनरूपम्, "मनो ब्रह्मेत्युपासीत" इत्युपासिनोपक्रान्तस्य "भाति च तपति च कीर्त्या यशसा ब्रह्मवर्चसेन, य एवं वेद" ति वेदनशब्देनानुवादात्, "नस वेद" "आत्मेत्येवोपासीत" "यस्तद्वेद यत्स वेद समयैतदुक्तम्" इत्यत्र

"अनुम एतां भगवो देवतां शाधि यां देवतामुपास्स" इत्यत्रापि व्यतिरेकेणोपक्रमोपसंहारदर्शनाच। वेदनं च ध्यानरूपम्, "ध्रुवा स्मृतिः, स्मृतिलम्भे सर्वग्रन्थीनां विप्रमोक्ष" इति ध्रुवायास्तैलधारावदविच्छिन्नस्मृतिरूपायाः स्मृतेस्साधनत्वेन विधानात्। साच स्मृतिर्दर्शनसमानाकारा, "भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः। क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे" इति दर्शनस्य मोक्षसाधनत्वावगमात्। नच स्मृतेः साक्षात्कारस्य च साधनत्वविधायकमुपदर्शितप्रमाणं कथं वेदनस्य स्मृतिरूपत्वदर्शनसमानाकारतामिधायकमिति वाच्यम्; तथासत्यनेकोपायानां तेषां विकल्पस्य वाङ्गीकारेण गौरवापत्तेः, वेदनादिशब्दानां सामान्यशब्दत्वेन तदपेक्षितविशेषसमर्पकत्वे सम्भवति अनपेक्षितोपायान्तरविधायकत्वानौचित्यात्, "आत्मा वा अरे द्रष्टव्य श्रोतव्यो मन्तव्य" इत्यादौ दर्शनसमानाकारत्वविधानाच। अन्यथा "द्रष्टव्य" इति दर्शनरूपज्ञानान्तरविधौ वाक्यभेदापत्तेः।

नच श्रवणमननयोरपि विधानेन वाक्यभेदोऽवश्यमभ्युपगन्तव्य एवेति वाच्यम्; ध्येयवस्त्वनुभवमन्तरेण ध्यानासम्भवेन ध्यानविधिनैव ध्येयानुभवरूपश्रवणस्य प्राप्तत्वेन श्रवणप्रतिष्ठापनार्थस्य मननस्य तत एव प्राप्तत्वेन च तयोरपि विधानाभावेन तदर्थं विधिव्यापाराभावात्। दर्शनसमानाकारा स्मृतिरेव भक्तिशब्देनोच्यते, उपासनपर्यायत्वाद्भक्तिशब्दस्य। अतएव भगवताऽभिधीयते।

> "भक्त्या त्वनन्यया शक्य अहमेवंविधोऽर्जुन।
> ज्ञातुं द्रष्टुं च तत्त्वेन प्रवेष्टुं च परन्तप॥
> पुरुषस्स परः पार्थ भक्त्या लभ्यस्त्वनन्यये" ति।

एवंरूपस्य ध्यानरूपस्य वेदनस्याहरहरनुष्ठेयस्याभ्यासाधेयातिशयस्याप्रयाणादनुवर्तमानस्यैव ब्रह्मप्राप्तिसाधनत्वात्तदुत्पत्तये

सर्वाण्याश्रमकर्माणि यज्ञादीन्यवश्यमनुष्ठेयानि, " यज्ञेने " त्यादि श्रुतेः । सूत्रकृतापि " आप्रयाणात्तत्रापि हि दृष्टम् " " अग्निहोत्रादि तु तत्कार्यायैव तद्दर्शनादि " त्यादिना तथोक्तत्वात् । तथा यज्ञादिवदूर्ध्वपुण्ड्रचक्रादिधारणान्यपि उपासनाङ्गान्यवश्यमनुष्ठेयानि । तथाच श्रूयते " धृतोर्ध्वपुण्ड्रः कृतचक्रधारी विष्णुं परं ध्यायति यो महात्मे " त्यादिषु । इदञ्चोर्ध्वपुण्ड्रधारणं तप्तचक्रादिधारणं च श्रुतिस्मृतीतिहासपुराणपाञ्चरात्रादिषु प्रसिद्धम् ।

तथाहि शतपथे प्रथमे खण्डे–" तप्तं चक्रं द्विभुजे धार्यमित्यग्निहोत्रमेव लोको भवत्यूर्ध्वपुण्ड्रमालिखेत्तस्माद्द्विरेखं भवति भूः स्वयंभूर्ब्रह्मणः सायुज्यं सलोकतां जयति य एवं वेदे " ति, द्वितीये " तप्तं चक्रं द्विभुजे धार्यमिति स विष्णुलोको भवति सोऽनन्तलोको भवति य एवं वेद " ति, तृतीये " तापः पापं हन्तीति सुदर्शनं धार्यमित्यूर्ध्वपुण्ड्रं द्विरेखं भवति ब्रह्मणः सायुज्यं सलोकतां जयति य एवं वेदे " ति, चतुर्थे " तप्तं चक्रं द्विभुजे धार्यमिति ब्रह्मणः सायुज्यं सलोकतां जयति य एवंवेदे " ति, पञ्चमे " इदं चैतत्पुरुषस्य परायणो भवति तप्तं चक्रं द्विभुजे धार्यमिति, षष्ठे "येनाङ्कितां मनवो लोकसृष्टिं वितन्वन्ति ब्राह्मणास्तद्वहन्ति, अग्निना वै होत्रा तप्तं चक्रद्विभुजे धार्यमित्यूर्ध्वपुण्ड्रमालिखेत्तस्माद्द्विरेखं भवति पुनरागमनं न याति ब्रह्मणः सायुज्यं सलोकतां जयति य एवं वेदे " ति, सप्तमाष्टमनवमदशमैकादशेष्वपि एवमेव वाक्यानि दृश्यन्ते । त्रिष्वपि वेदेषु " पवित्रं ते विततं ब्रह्मणस्पते प्रभुर्गात्राणि पर्येषि विश्वतः । अतप्ततनूर्न तदामोऽश्नुते शृतास इद्वहन्तस्तत्समाशत " इति । अस्यार्थः चतुर्मुखस्यापि नायकभूतस्त्वं विभुः विश्वतः सर्वस्य, सार्वविभक्तिकस्तसिः, गात्राणि पर्येषि, व्यापकस्य

तत्र विततं, पवित्रं-चक्रमस्ति, " सुदर्शनं सहस्रारं पवित्रं चरणं पविरि"ति निघण्टुवचनात्, " पवित्रं चरणं नेमी रथाङ्गं सुदर्शनम्। सहस्रारं प्राकृतम्नं लोकद्वार महौजसम्। नामानि विष्णुचक्रस्य पर्यायेण निबोध म " इति पाद्मवचनाच्च। तेनेत्यध्याहार्यम्, तापस्य करणसाकाङ्क्षत्वात्पवित्रपदस्य प्रथमान्ततयानाकाङ्क्षितत्वाच्च। तेन— पवित्रेण सुदर्शनेन, अदग्धगात्रः, अतएवामः—अपक्क-पायः, अदग्धपाप इति यावत्। तत्—ब्रह्म, "तदिदिता— एतस्य महतो भूतस्य नाम भवती " ति तैत्तिरीयश्रुतेः। तत्प-वित्रम्, इद्वहन्तः—वहन्त एव, शृतासः-परिपक्वरूपाया, तत्-ब्रह्म, समाशत— अश्नुते इति। अत्रातप्ततनूरित्यस्य प्रतिसम्बन्धि तया वहन्त इत्युक्तं तप्तचक्रधारणमेव गम्यते।

ननु, हे ब्रह्मन्! प्रभुस्त्वं, विश्वतः— सर्वाणि गात्राणि, पर्येषि समष्टिरूपतया व्यष्टिरूपाणि व्याप्नोषि, ते पवित्रं त्वत्सृष्ट तथा त्वत्सम्बन्धि पवित्रम्-श्रौते सोमनिष्पत्तिहेतुभूतं वालोरूप स्मार्ते देवतारूपं वा प्रतिष्ठारूपं वा तत्साधनहिरण्यादिरूपं यजमान शुद्धिहेतुभूतम्, विततम्—विस्तृतं व्याप्तं वा, वर्तते, एतत्पवित्र निर्वृत्य, प्रकृतकर्मसम्बन्धिना तपसा, अतप्ततनुः, ततएवामः-अपरिपक्वः असंपादिताधिकारः, तत्- प्रकृतकर्मफलम्, नाश्नुते, प्रकृतकर्मसंबन्धितपसा संपादिताधिकारा एव, वहन्तः— वहप्रापण इतिधातुः, प्रकृतकर्म निर्वर्तयन्तः, तत् —प्रकृतकर्मफलम्, प्राप्नुवन्ति, इत्यर्थः कुतो न स्यादितिचेत्;— दशापवित्रादौ पवि त्रपदस्य संज्ञात्वाभावेन ऋषिदेवतात्वाभावेन च " पुरःसंज्ञायामि " त्यनेन वा " कर्तरिचर्षिदेवतयोरि " त्यनेन वा प्रत्ययालाभेन शुचित्वगुणयोगेनैव पवित्रपदप्रवृत्तेर्वक्तव्यत्वेन प्रथमश्रुतगावेत्र रूढ लक्षणापत्तेः, चतुर्मुखसृष्टत्वस्य साधारणत्वेन पवित्रमिति विशेषो-क्त्यनुपपत्तेः, ब्रह्मणस्पत इति " ब्रह्माधिपतिब्रह्मणोधरातरि " त

तापनीयार्थप्रत्यभिज्ञानेन परब्रह्मातिरिक्ते ब्रह्मशब्दस्य चतुर्मुखे स्वरसत्वेन च ब्रह्मणस्पतिशब्दस्य भगवति स्वरसतया प्रकृतपरत्वानुपपत्तेः, सर्वाधिकारिस्वरसप्रश्नशब्दासामञ्जस्यात्, सर्वगात्रव्याप्तेस्सर्वव्यापिन्येवोपपत्तेः,'अतप्ततनू'रि' त्यत्र करणाकांक्षायां प्रकृतस्य करणतयान्वयं विहाय प्रकृतकर्मसंबन्धितपसः करणत्वेनान्वयस्य क्लिष्टत्वात्, तापशब्दास्वारस्यात्, नामतया तच्छब्देन ब्रह्मोपस्थापनसम्भवेऽन्यप्रकृतकर्मकपरामर्शस्यानौचित्यात्, निरुपसर्गस्य धातोर्निर्वृत्त्यर्थकत्वानुपपत्तेः, ततपदस्य फलपरत्वास्वारस्याच्च,'पवित्रं ते विततमिति मुद्रयेद्दक्षिणे भुज' इति सनत्कुमारस्मृतिविनियोगानुगुणत्वाच्च पूर्वोक्त एवार्थो युक्तः। किञ्च " पवित्रं ते विततमि " ति मन्त्रे तापहेतुत्वेनाऽपेक्षितोऽग्निसंयोगः पवित्रशब्दवाच्यं चक्रमिति च मैत्रायणीयशाखायां " पवित्रमित्यग्निः. अग्निर्वै सहस्रारः, सहस्रारो नेमिः, नेमिना तप्ततनुर्ब्रह्मणस्सायुज्यं सलोकतामाप्नोती" ति वाक्ये स्पष्टमवगम्यते। अत्र हि पवित्रमिति मन्त्रस्थपवित्रपदवाच्यमनूद्य ' अग्निरि'ति अग्निसंयोगाभिधानात्,तापापेक्षितहेतुलाभः। अग्निसंयुक्त तप्त अयःपिण्डेऽग्निरयःपिण्ड इति सामानाधिकरण्यदर्शनेनात्रापि सामानाधिकरण्यादग्निसंयोगलाभः। " अग्निर्वै सहस्रार " इत्यत्राग्निशब्देनाग्निसंयुक्तं चक्रमनूद्य, " सहस्रार " इति सहस्रारशब्दवाच्यत्वमुच्यते, " सहस्रारो नेमिरि " ति नेमिशब्दवाच्यत्वम्। न च मन्त्रोद्देशेन पवित्रत्वविधिः शङ्कनीयः, इतिशब्दानन्वयात्। तद्योगेन प्रथमोपात्तत्वेन तस्यैवोद्देश्यसमर्पकत्वप्रतीतेः। सहस्रारशब्दनेमिशब्दयोरस्वारस्यात्। अस्मन्मते तु " पवित्रमि " ति ' पवित्रं त' इति मन्त्रपदमुपादाया ' ग्निरि" त्यनेन तस्याग्निसंयुक्तपवित्रपरत्वं प्रतिपादिता ' सहस्रार ' इति ' नेमिरि ' ति पदाभ्यां सुदर्शनविषये प्रसिद्धिमत्पदाभ्यां सुदर्शनत्वज्ञापनात्पदद्वयं सप्रयोजनं स्वरसं च।

अथर्वणे—

" चक्रं बिभर्ति वपुषाभितप्तं बलं देवानाममितस्य विष्णोः ।
स एति नाकं दुरिता विधूय विशन्ति यद्यतयो वीतरागाः ॥"

इति स्पष्टमेव तप्तचक्रधारणमवगम्यते।

यजुर्वेदे तृतीयकाठके—

चरणं पवित्रं विततं पुराणम्। येन पूतस्तरति दुष्कृतानि।
तेन पवित्रेण शुद्धेन पूताः। अतिपाप्मानमरातिन्तरेम।
लोकस्य द्वारमर्चिमत्पवित्रम्। ज्योतिष्मद्भ्राजमानं महस्वत्।
अमृतस्य धारा बहुधा दोहमानम्। चरणं नो लोके सुधितान्
दधातु ॥

इति मन्त्रयोस्तप्तचक्रधारणमवगम्यते, चरणशब्दश्रवणात्। तथाहि अग्निप्रकरणे 'तं चरणमब्रवीत्' इति वक्तृत्वदर्शनाच्चरणस्य चेतनत्वम्,'अहमु नेचरणमस्मी' त्युक्त्या चरणशब्दस्य तन्नामत्वं'मां नु यजस्वे' ति नियोगाद्देवतात्वं चावगम्यते। ज्ञानयज्ञाख्ये भाष्ये भट्टभास्करेण चरणशब्दो देवताविशेषपरतया व्याख्यातः। त्रिवेदी भाष्ये—धानुष्कयज्वना सुदर्शनपरतयायं व्याख्यातः। "पवित्रं चरणं नेमी रथचक्रं सुदर्शनम्।" 'चरणं आह्वयेचक्र' इति नैघण्टुक-वचनाच्चायं सुदर्शनपरः। 'विष्णोर्नुकेन मन्त्रेण ताप-यित्वा सुदर्शनम्। चरणं पवित्रमिति तद्द्वाभ्यामभिमन्त्रयेत् ॥ पवित्रं ते विततमिति मुद्रयेद्दक्षिणे भुज' इति सनकस्मृति वचनेन सुदर्शनधारणे तत्सान्निध्यार्थाभिमन्त्रणे विनियोगादनयो-स्सुदर्शनपरत्वम्। मन्त्रार्थस्तु-चरणं सुदर्शनम्, पवित्रं-धारणं कुर्वतां सकलपापनिरासकम्, विततं-विभूतिद्वयफलप्रदानहेतुत्वात् तत्र तत्र

विस्तीर्णम् पुराणं-एवंभूतवैभवमिदमनादि। पवित्रत्वमेव विशदयति-' येने ' ति। धृतेनेत्यध्याहर्तव्यम्, धृतेन येन चक्रेण, पूतः परिशुद्धः, दुष्कृतानि-भोगमोक्षविरोधीनि पापानि, तरति अतिक्रामति, तैरस्पृष्टो भवतीत्यर्थः। एवं सुदर्शनस्य स्वाभाविकवैभवं प्रदर्श्य तत्फलं स्वस्मिन्नाशास्ते ' तेने ' त्यादिना। तेन चक्रेण धारयतां पापशोधकेन स्वतः शुद्धेन, पूताः-परिशुद्धाः, पाप्मानं-दुष्कृतम्,-अरातिं-अभिमत विरोधिनम्। अतितरेम प्रार्थने लिङ्। एवमभिमतविरोधिनिरासकत्व मुक्त्वा अभीष्टफलप्रापकत्वमाह। लोकस्य परलोकस्य, द्वारं प्रापकम्, अर्चिगत् अर्चिष्मत्, सहस्रज्वालमित्यर्थः, ज्योतिष्मत् अग्निसंयुक्तम्, अनेन धारणकालेऽपेक्षितो वह्निसंसर्ग उच्यते, भ्राजमानं-भृशतरं दीप्यमानम्,महस्वत् अरवत्-इति धन्विपज्वना व्याख्यातम् अमृतस्य धारा बहुधा दोहमानं-तापत्रयाभितप्तं पुरुषमाप्यायितुमद्भुतममये बहुप्रकारेणामृतधारा दुहानम्,तापत्रयशान्तिहेतुत्वाद्बहुधात्वम्, यद्वा-अमृतस्य धाराः मोक्षमार्गान्, विद्याविविध्याभिप्रायं बहुवचनम्, कर्म-ज्ञानादिपरिकराभिप्रायं बहुधात्वम्,चरणं-चक्रम्, नः-अस्मान्, लोके-परलोके, सुधितान् आविर्भूतनिरतिशयानन्दान्, दधातु स्थापयतु, इति।

आथर्वणे- " चक्रमादायाग्नौ ताप्य ब्राह्मणस्य दक्षिणबाहौ धारयेच्चक्रमुपविश्यति पाञ्चजन्यमादायाग्नौ ताप्य ब्राह्मणस्योत्तर बाहौ धारयेत् ब्रह्मवादिनो वदन्ती " ति।

एवमन्यान्यप्याथर्वणवाक्यानि तप्तचक्रधारणप्रतिपादकानि प्राज्ञैर्लिखितानि। नचैतेष्वनाश्वासः शङ्कनीयः, पाञ्चरात्रे बहुप्रदेशेषु आथर्वणवाक्यानि तप्तचक्रधारणबोधकान्युपादाय तत्र विनियोग दर्शनात्। पाद्मोत्तरखण्डे त्रिंशाध्याये-

" सर्वाश्रमेषु वसतां ब्राह्मणानां विशेषतः।
विधिना वैष्णवं चक्रं धार्यं हि श्रुतिचोदितम्॥

दक्षिणे तु भुजे विप्रो बिभृयाद्वै सुदर्शनम् ।
सव्ये तु बिभृयाच्छङ्खमिति वेदविदो विदुः ॥
एवं महोपनिषदि प्रोक्तं चक्रादिधारणम् ।
तथैव साम्नि यजुषि ऋचि चोक्तं शुभानने ॥ " इति ।

बृहत्पाराशरस्मृतौ—

" अग्निनैव तु संयुक्तं चक्रमादाय वैष्णवः ।
दाहयेत्सर्ववर्णानां हरिसालोक्यसिद्धये ॥ " इति ।

मनुः— " ऊर्ध्वपुण्ड्रं तथा चक्रं नित्यं धारयते नरः ।
तेन तस्याशुभं नश्येच्छुभमस्य विवर्धते ॥ " इति ।

शाण्डिल्यः— " पशुपुत्रादिकं सर्वं गृहोपकरणानि च ।
अङ्कयेच्छङ्खचक्राभ्यां नाम कुर्याच्च वैष्णवम् " ॥ इति ।

यमः— " उपवीतं शिखाबन्धं चक्रलांछनसंयुतम् " इति ।

शङ्खः— " उपवीतादिवद्धार्याः शङ्खचक्रादयस्सदा ।
ब्राह्मणस्य विधानेन वैष्णवस्य विशेषत " इति ॥

हारीतः— " प्रतप्तशङ्खचक्रादिहेतिभिर्मन्त्रमुच्चरन् ।
दक्षिणे तु भुजे चक्रं वामांसे शङ्खमेव चे" ति ।

ब्राह्मणानां तप्तचक्रधारणाभावे प्रत्यवायं स एवाह—

" अनङ्कयित्वा चक्रेण यत्किञ्चित्कर्म संचरेत् ।
तत्सर्वं याति वैफल्यमिष्टापूर्तादिकं तथा ॥
अचक्रधारिणो विप्राः सर्वकर्मसु गर्हिताः ।
अवैष्णवत्वमापन्नो नरकं चैव गच्छति ॥
तस्माच्चक्रं विधानेन तप्तं वै धारयेद्द्विजः ।
सर्वाश्रमेषु वसतां स्त्रीणाञ्च श्रुतिबोधनात् " इति ।

विष्णुधर्मे— " यथा श्मशानगं काष्ठमनर्हं सर्वकर्मसु ।
तथाऽचक्राङ्कितो विप्रः सर्वकर्मबहिष्कृत " इति ।
अत्राचक्राङ्कित इतिच्छेदः , चक्रधारणविधिप्रकरणात् ।
भारते— " नान्यं देवं नमस्कुर्यान्नान्यं देवं निरीक्षयेत् ॥
चक्राङ्कितःसदा तिष्ठेत् मद्भक्तःपाण्डुनन्दने " ति ।
पाद्मे " वैष्णवत्वस्य सिद्ध्यर्थं ज्ञानसिद्ध्यै विशेषतः ।
प्रतप्तेच्छङ्खचक्राभ्यां हुत्वा होमं विधानत " इति ॥

आग्नेयपुराणे—

" ललाटे तु गदा धार्या मूर्ध्नि चापं ततःपरम् ।
नन्दकं चैव हृन्मध्ये शङ्खचक्रे भुजद्वय " इति ॥
वाराहे– ' मच्चक्राङ्कितदेहो यो मद्भक्तो भुवि दुर्लभः ।
मामुपैष्यति धर्मात्मा मदेकान्तेन चेतसे ' ति ॥
वामने— ' लीलयापि लिखेद्यस्तु बाहुमूले सुदर्शनम् ।
कुलकोटिं समुद्धृत्य स गच्छेत्परमं पदमि ' ति ॥
मात्स्ये — ' शङ्खचक्राङ्कनं कुर्यादात्मनो बाहुमूलयोः ।
कलत्रापत्यभृत्येषु पश्वादिषु विमुक्तय ' इति ॥
गारुडे— ' अग्निनैव तु संयुक्तं चक्रमादाय वैष्णवः ।
दाहयेत्सर्ववर्णानां हरिसालोक्यसिद्धय ' इति ।
कूर्मे — ' चक्रादिधारणं पुंसां परसम्बन्धवेदनम् ।
पतिव्रतानिमित्तं हि वलयादिविभूषणमि ' ति ॥
वायव्ये— ' उपवीतादिवद्धार्योश्शङ्खचक्रादयस्सदा ।
ब्राह्मणस्य विशेषेण वैष्णवस्य विशेषत ' इति ॥

आदित्यपुराणे—

' चक्रादि धारयेद्विप्रो ललाटे मस्तके भुजे ।

पातकादिविशुद्ध्यर्थं भवक्लेशविनाशनमि ' ति ॥

ब्रह्मवैवर्ते— ' चक्राङ्कितभुजं विप्र यो निन्दयति सर्वदा ।

स याति नरकं घोरं यावदाभूतसंप्लवम् ' इति ॥

भविष्यत्पुराणे— ' चक्राङ्कितभुजं दृष्ट्वा यस्तु तन्नाभिवादयेत् ।

तिर्यग्योनिशतं प्राप्य विष्ठायां जायते कृमिरि ' ति ॥

मार्कण्डेये— ' शङ्खचक्राङ्कनं कुर्यादात्मनो बाहुमूलयोरि ' ति ।

श्रीभागवते— ' चक्राङ्कितस्य सांनिध्ये तपः कुर्यात्प्रयत्नत ' इति ।

शिवपुराणे- " श्रावका वासुदेवस्य तथैव नटनर्तकाः ।

अन्ये च वैष्णवास्तत्र सर्वे चक्रेण लाञ्छिता ' इति ॥

ब्रह्माण्डे- सुदर्शनेन यस्याङ्गं लाञ्छितं तु भवेत्सदा ।

देहे तस्य वसेन्नित्यं श्रिया युक्तः स्वयं हरिः ।

अग्नितप्तेन चक्रेण बाहुमूले तु लाञ्छिता इति ॥

आचारश्च दर्शितो तापनीये 'ते प्रजापति मोवर्णैः कलशैरमृत पूरैरानुष्टुभादिभिर्मन्त्रैरभ्यषिञ्चन् , तं सुदर्शनेन दक्षिणतोऽङ्कन् पाञ्चजन्येन वामतः, द्वयेनैव सुरक्षितो भवति ।

ब्रह्मा 'ततःप्रभृति शक्राद्याः सर्वे देवा मुनीश्वराः । चिह्न कृष्णायुधादीनां नित्यं कुर्वन्ति यत्नतः । तस्मात्त्वमपि देवेश कुरु कृष्णायुधाङ्कितम् । स्वदेहं तव सर्वत्र सर्वसिद्धिर्भविष्यती ' ति ।

स्कान्देच प्रदर्शितोऽयमाचारः ' तदा प्रभृति ब्रह्माद्याः सर्वे देवाः सवासवाः । ऋषयः सिद्धगन्धर्वाः पाताले पन्नगेश्वराः । दधौ तस्य हरेश्चक्रं शङ्खं चैव विधानतः । धारयन्ति मुदा युक्ता' इति ।

शतपथे चायमाचारः प्रदर्श्यते ' इमावेव गोतमभरद्वाजौ । अयमेव गोतमः, अयं भरद्वाजः , इमावेव विश्वामित्रजमदग्नी, अयमेव विश्वामित्रोऽयंजमदग्निः, इमावेव वसिष्ठकश्यपौ, अयं

'वसिष्ठोऽयं काश्यप' इति 'येनाङ्किता लोकगुरुं वितन्वन्ति ब्राह्मणा स्तद्वहन्ती' त्यत्र गौतमादेर्दृष्टान्ततया उपादानात्तैः सुदर्शनं धृतमिति गम्यते । सदाचारप्रदर्शनार्थं गौतमादीन्निर्दिश्य स एवायमिति तत्तौल्यमन्यस्यापि चक्राङ्कितस्य प्रतिपाद्यत इति चावगम्यते ।

इतिहाससमुच्चये- 'केचिच्छङ्खाङ्कितास्तत्र प्राणिनः पुण्यदायिन' इति तदाचारः प्रदर्शितः ।

काशीखण्डे द्व्यशीतितमेऽध्याये- 'आसीदमित्रजिन्नाम राजा परपुरञ्जय' इत्यारभ्य 'पुरुषोत्तमतात्को न प्राप्तस्त्वमिन भूपत' इत्यन्तेन नारदेन सुबहुमन्यमानं सर्वदेवपूजनीयममित्रजिन्नामकं राजानं प्रदर्श्य 'विशालोरस्थलतलप्रालम्बितुलसीस्रजम् । शङ्खचक्राङ्कसुभगभुजद्वयविराजितमि' त्यमित्रजिन्नामकेन राज्ञानुष्ठितत्व प्रतिपाद्यते ।

तस्माच्छ्रुतिस्मृतीतिहासपुराणाचारैस्तप्तचक्रादिधारण ब्राह्मणानां विशेषतो वैष्णवानां चावश्यकर्तव्यमिति सिद्धम् ।

यत्त्वत्र कैश्चिदुक्तं 'शङ्खचक्राद्यङ्कनं च नृत्यगीतादिकं तथा ।' इति शूद्रधर्मतया प्रतिपन्नं 'श्रौतस्मार्तक्रियो विप्रो नाङ्कयेदङ्गमङ्कनैः । अपि विष्ण्वादिसंबद्धैस्तत्क्षेत्रे पतितो भवेत् । अज्ञानादथवा लोभाद्रागतो वा सुदर्शनम् । धत्ते कुलघ्नं तं दृष्ट्वा सवासा जलमाविशेत् । भुजाग्रे मलिलेनैव विलिखेद्यस्सुदर्शनम् । वेदाग्निज्ञानवान् सोऽपि दहत्यासप्तमं कुलम् । शङ्खचक्रादि लिङ्गञ्च यो मूढो धारयेत्तनौ । पाषण्डस्स हि विज्ञेयः सर्वकर्मबहिष्कृत' इति गोभिलस्मृतिवचनेषु ब्राह्मणानां तप्तचक्रधारणं निषिद्धमिति । अत्र ब्रूमः-उदाहृतश्रुतिस्मृतीतिहासपुराणाचारैः प्रसिद्धस्य चक्रादिधारणस्य निरुक्तस्मृति-

वचनैर्निषेधोऽनुपपन्नः, स्मृत्याद्यनुगृहीतानेकप्रत्यक्षश्रुतिविरोधेन 'भूयसां स्याद्बलीयस्त्वमि' ति न्यायेन विरोधाधिकरणन्यायेन च तेषा मन्यपरत्वस्यैव न्याय्यत्वात् । 'लाञ्छितव्या यथायोगं शङ्खचक्रादि लक्षणैः । आराधकाद्याः कर्मण्या एवं चक्रादिलाञ्छिता ' इत्यादि वचनागतं वृत्त्यर्थं नृत्यगीतादिकं कुर्वतां यदङ्कनं तद्द्विजातेर्निषिध्यते'शङ्खचक्राद्यङ्कनं चे' ति वचनेन । देवालये वृत्त्यर्थं नृत्यगीतादि करणं तदर्थं चक्रादिधारणं चेति यत् अयं धर्म एकजातेरेव न द्विजाते-रित्युक्तवचनार्थः । न च ब्राह्मणानां वृत्त्यर्थं नृत्यगीतादिकरणं तदर्थ मङ्कनं चाप्रसक्तमिति वाच्यम् आपद्युत्तरोत्तरवर्णवृत्तेः'आपत्स्वनन्तरा वृत्तिरि' 'त्यादिवचनेन प्राप्तेरापद्यपि एवंविधाङ्कनं न कर्तव्यमिति निषेधसम्भवात् । अन्यथा ब्राह्मणादेस्स्वरूपेणाङ्कननिषेधे जातिपद वैयर्थ्यापत्तेः, नारदाद्यनुष्ठितगीतादेर्निषेधानौचित्यात् , अयमिति पदवैयर्थ्यात् । तदभावेऽपि अङ्कनमेकजातेर्नृत्यगीतादिकं चेत्य न्वयोपपत्तेश्च । तस्माद्वचनान्तरप्रसिद्ध जीविकारूप नृत्यगीताद्यर्थोऽङ्कनमेवात्र वचने ब्राह्मणानां निषिध्यत इत्येव युक्तम् ।

'शङ्खचक्रे मृदा यस्त्वि' ति वचनं तापभीत्या मृदा रेखया चित्रयच्छक्राद्याकृतिं कुर्याच्चतायसेन वा तौ शूद्रवद्बहिष्कार्या वित्येवम्परम् ,नतु प्रमाणान्तरसिद्धकनकरजतकांस्यताम्रादिकरणकाङ्कनादिनिषेधपरम्, तथा सति मृदा आयसेन वेति पदवैयर्थ्यापत्तेः । तयोः कनकाद्युपलक्षकत्वेनाङ्कनमात्रनिषेधपरत्वे लक्षणापत्तेः,

" सुदर्शनं पाञ्चजन्यं सौवर्णेन प्रकारयेत् ।
रौप्येण वापि ताम्रेण कांस्येनापि प्रकारयेत् ॥ "

इत्यादिविरोधाच्च । " श्रौतस्मार्तक्रियो विप्र " इति गोभिलवचनमपि श्रौतस्मार्तक्रियानिष्ठत्वज्ञापकचिह्नानि दम्भार्थं न धारयेत् , भगवच्चिह्नान्यपि श्रौतस्मार्तक्रियानिष्ठत्वद्योतनाय न धारयेदित्येव-

स्परम्, न तु स्वरूपेण तप्तचक्रादिधारणनिषेधपरम्, अन्यथा श्रौतस्मार्त क्रिय इति पदवैय्यर्थ्यापत्तेः। "तस्मात्तप्तं विधानेन चक्रं वै धारयेद्द्विजः। सर्वाश्रमेषु वसतां स्त्रीणां च श्रुतिचोदनात्। अग्निनैव तु संयुक्तं चक्रमादाय वैष्णवः। दाहयेत्सर्ववर्णानां हरिसालोक्य-सिद्धये" इत्यादिहारीतपाराशर्याद्यनेकस्मृतिवचनविरोधाच्च। "अज्ञानादथवा लोभाद्रागतो वा सुदर्शनमि" ति वचनमपि द्विव शुद्धिं विना सद्गोष्ठीप्रवेशाय क्रियमाणमङ्कनं वैष्णवधनं चोरा ना पहरन्तीति श्रुत्वा स्वधनरक्षणाय यदङ्कनं धनलाभेच्छया या यदङ्कनं तन्निषेधपरमेव। "भुजाग्रे सलिलैर्नैवे" ति वचनं सलिलमात्राङ्कननिषेधपरं सत्तप्तचक्रधारणमेव ज्ञापयति। "शङ्खचक्रं च लिङ्गं चे" ति वचनमपि न तप्तचक्रादिधारणस्य स्वरूपेण निषेधपरम्, तद्धारणबोधकबहुश्रुतिविरोधात्, सर्वेषामविशेषेण तप्तचक्रधारणं धर्म इति वदता भगवता हारीतेन "रागसन्दग्धगात्राणां न स्यात्पारत्रिकं सुखमि" ति निषेधस्य रागाङ्कनविषयत्वस्फुटीकरणाच्च रागादिनाङ्कननिषेधपरम्, लिङ्गसमुच्चयनिषेधपरं वा। अत एव "स्वदेहे वान्यदेहे वा भवेदत्रिकिणो द्विज" इति वचने अत्रिकिणशब्देन किणत्रयोपस्थापकेन त्रिमूर्त्यायुधचिह्नात्मककिणत्रयनिषेधेन तप्तचक्रादिधारणनिषेध इति निरस्तम्, जीविकार्थाङ्कननिषेधे समुच्चयधारणनिषेधे वा तात्पर्यस्य युक्तत्वात्। अत्र द्विजशब्दो ब्राह्मणपरः, किणत्रयं च ज्याघातयुद्धधृतार्थनिरन्तरासिकाविनिर्मितमिति व्याख्यातत्वेन त्रिमूर्त्यायुधांकननिषेधपरत्वस्याभावाच्च। 'न ब्रह्मविष्णुरुद्राणां चिह्नमेकस्य धारयेत्। स्वयमेव श्रुतिः प्राह सर्वदेवमयो द्विजः" इति परेण लिखितं वचनं मूलस्मृतिषु क्वापि दृश्यते चेत्समुच्चित न धार्यमित्येवं योजनीयम्।

यत्तु केनचिदुक्तं "यस्तु मन्तप्तशङ्खादिलिङ्गचिह्नतनुर्द्विजः। स सर्वयातनाभोगी चण्डालः कोटिजन्मसु। चक्राङ्कितततनुर्वापि

राजलिङ्गाङ्कितोपि वा। नाधिकारी स विज्ञेयः श्रौतस्मार्तेषु कर्मसु"
स्कान्दे— " स्वदेहे परदेहे वा न कुर्यादङ्कनं नरः "।
मानवपुराणे —आयुधैश्शङ्खचक्राद्यैर्नदहेच्च कदाचन।

'मनुष्याणां च नाम्ना च न लिखेच्चोरसि' प्रमाद् ॥
श्रौतस्मार्तसमाचारो नाधिकारी च लाञ्छितः। लाञ्छिताश्च न सम्भाव्या न स्पृश्याश्च तथैव च। न दर्शनीयास्तान्राजा देशाच्छीघ्रं प्रवासयेत्" इत्येवं जातीयकानि वचनानि चक्रांकननिषेधपराणि विद्यन्ते ; अतस्तप्तचक्रादिधारणं न ब्राह्मणधर्म इति। तन्तुच्छम्, एतेषां वचनानां मूलपुस्तकेष्वदर्शनात्, जीविकांकननिषेधपरत्वे-नाप्युपपत्त्याऽनेकश्रुतिस्मृतिसिद्धचक्रादिधारणनिषेधपरत्वकल्पना—नौचित्यात्। किञ्च "स्वदेहपरदेहे वे" त्यादिस्कान्दवचनेनरशब्दस्य सामान्यशब्दत्वात् स्कान्द एव " येषां चक्रांकितं गात्रमि" त्यादि वचनेन विशेषतस्त्रैवर्णिकानां चक्रादिधारणविधानदर्शनाच्च शूद्रवि-षयः। तथा च शूद्रस्य चक्राङ्कनकर्तृत्वनिषेधकम्। अतस्तप्तचक्रादि-धारणं ब्राह्मणादिभिरवश्यं कर्तव्यमिति सिद्धम्।

ऊर्ध्वपुण्ड्रधारणं च श्रुत्यादिसिद्धम्।

ऋग्वेदे तावत्- " ऊर्ध्वरेखं प्रदधदि " ति।
महोप निषदि- " धृतोर्ध्वपुण्ड्रः परमेशितारं नारायणं सांख्य योगाधिगम्य " मिति।

भाल्लवशाखायां— " यत्र मूर्तेरूर्ध्वपुण्ड्र " मित्यारभ्य 'कुलं तारयते " 'स गच्छेद्ध्यानं पदमि " ति।

आथर्वणे— " हरेः पदाकृतिमात्मनो हिताय मध्ये च्छिद्र मूर्ध्वपुण्ड्रं यो धारयति स परस्य प्रियो भवती " ति।

स्मृतयश्च–अग्निवेश्यगृह्ये–
" त्रिपुण्ड्रं ब्राह्मणो विद्वान् लीलयापि न धारयेत्।

धारयेत्प्रयतस्सम्यगूर्ध्वपुण्ड्रं विधानतः" ।
बोधायनेनाप्युक्तं- "होमपूजादिसमये सायंप्रातः समाहितः ।
ऊर्ध्वपुण्ड्रान् धरन्विप्रो भवेच्छुद्धो नचान्यथे" ति ।
शातातपश्च- "यच्छरीरं मनुष्याणामूर्ध्वपुण्ड्रं विना भवेत् ।
द्रष्टव्यं नैव तद्गात्रं श्मशानसदृशं हि तत्" ।
विष्णुस्मृतौ "उपवीतं शिखाबन्धनूर्ध्वपुण्ड्रं विना कृतम् ।
अपवित्रकरं कर्म विप्रस्य विफलं भवेत् ॥
स्मृत्यन्तरेषुच "स्वाध्याये भोजने चैव होमे मङ्गळकर्मणि ।
ऊर्ध्वपुण्ड्रधरो नित्य रक्षसां चापनुत्तय" इति ।
भार्गवश्च "यज्ञो दानं तपो होमो भोजनं पितृतर्पणम् ।
सर्वं भवन्ति विफला ऊर्ध्वपुण्ड्रं विना कृता' इति ।
पराशरस्मृतौ— "निरूर्ध्वपुण्ड्रस्तु भवेन्न कदाचिदपि द्विजः ।
वैष्णवश्चेद्विशेषेण सर्वकर्माणि सोर्हती" ति ।
स्मृतिसारे— "स्वाध्याये भोजने चैव होमे मङ्गळकर्मणि ।
ऊर्ध्वपुण्ड्रधरो भूयाद्रक्षसां चापनुत्तय' इति ।
वामने— "रक्षार्थमघनाशार्थं मङ्गळार्थं च भामिनि ।
धारयेदूर्ध्वपुण्ड्रं तु शिरसाहर्निशं सदे" त्यादि ।
मरीचिश्च— "चतुरङ्गुळमूर्ध्वाग्रं द्व्यङ्गुळं विस्तृतं तथा ॥
द्विजः पुण्ड्रमृजुं सौम्यं सान्तराळं तु धारयेत्।
निरन्तराळं यः कुर्यादूर्ध्वपुण्ड्रं द्विजाधमः ।
स हि तत्रास्थितं विष्णुं श्रियं चैव व्यपोहति ।
अच्छिद्रमूर्ध्वपुण्ड्रं तु त्रिपुण्ड्रं धारयेत्तु यः ।
स पर्यायेण तान्याति नरकानेकविंशतिम्" ।
वृद्धमनुश्च— 'ऊर्ध्वपुण्ड्रं मृदा धार्यं यतीनान्तु विशेषतः ।
भस्मचन्दनगन्धादीन् वर्जयेद्यावदायुषमि' ति ॥
पुराणेषु मात्स्ये— 'त्रिपुण्ड्रं ब्राह्मणो विद्वान् लीलयापि न धारये

धारयेत्प्रयतस्सम्यगूर्ध्वपुण्ड्रन्तु नित्यश' इति।
नारदीये— ' सर्वजातिषु यो मर्त्यो विष्णुभक्तो भवेन्मुने।
तस्योर्ध्वपुण्ड्रकरणे अधिकारो बुधैस्स्मृतः ' ॥
ब्रह्माण्डे— ' सर्ववर्णेषु मद्भक्ताः कुर्वीरन्नूर्ध्वपुण्ड्रकम्।
ब्राह्मणाश्च विशेषेण जपहोमपरायणाः।
ब्रह्मचारी गृहस्थो वा वानप्रस्थोथ भिक्षुकः।
अवश्यं धारयेत्पुण्यमूर्ध्वपुण्ड्रं सुशोभनम्।
हरिपादाकृतिश्चापि वेणुपत्राकृतिं तथा।
पद्मस्य मुकुलाकारं तथैव कुमुदस्य च।
मत्स्यकूर्माकृतिं चापि शङ्खाकारमतः परम्।
धारयेदूर्ध्वपुण्ड्रं च मृदा शुभ्रेण वैष्णवः।
ऊर्ध्वपुण्ड्रधरो विप्रः सर्वलोकेषु पूजितः।
स विमानं समारुह्य याति विष्णोः परं पदम्।
ऊर्ध्वपुण्ड्रधरं विप्रं यः श्राद्धे भोजयिष्यति।
आकल्पकोटि पितरः परितृप्ता न संशय ' इति।
मार्कण्डेये—' ऊर्ध्वपुण्ड्रं मृदा धार्यं विप्रेण ब्रह्मवादिना।
उद्धृतासीति मन्त्रेण वैष्णवेन विशेषत ' इति।
नारदीये— ' ऊर्ध्वगत्यां तु यस्येच्छा तस्योर्ध्वं पुण्ड्रमुच्यते।
ऊर्ध्वं गत्वा तु देवत्वं स प्राप्नोति न संशयः।
ऊर्ध्वं नयति यत्पुण्डं प्राणिनः पापकारिणः।
तस्याख्याह्यूर्ध्वपुण्ड्रेति तस्मात्तद्धारयेद्द्विज ' इति।
भगवच्छास्त्रे परमेष्ठिसंहितायाम् —
' श्वेतमृत्तिकया वापि श्यामया चाथ पीतया।
ऊर्ध्वपुण्ड्रं द्विजैः कार्यं वैष्णवैश्च विशेषत ' इत्यादीनि बहूनि
वचनानि सन्ति तत्तत्र भगवच्छास्त्रे, विस्तरभियान्न लिख्यन्ते।